श्रीशङ्करानन्दनाथविरचितः

# सुन्दरीमहोदयः

कुलपतेः श्रीवेङ्कटाचलस्य 'शिवसङ्कल्प'-पुरोवाचा
पुरस्कृतः

सम्पादकः
डॉ. रुद्रदेवत्रिपाठी

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

YOGATANTRA-GRANTHAMĀLĀ

[ Vol. 20 ]

# SUNDARĪ MAHODAYA

*OF*

ŚRĪ ŚAṀKARĀNANDANĀTHA

*FOREWORD BY*

**PROF. V. VENKATACHALAM**

VICE-CHANCELLOR

*EDITED BY*

**DR. RUDRADEVA TRIPĀṬHĪ**

*Ex-Lecturer & Head of the Dept. of Research*

SHRI LAL BAHADUR SHASTRI KENDRIYA SANSKRIT VIDYAPEETH

NEW DELHI

&

Director

Brijamohan Birala Research Centre

Ujjain



VARANASI

1993

*Research Publication Supervisor—*
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.



*Published by—*
**Dr. Harish Chandra Mani Tripathi**
Publication officer,
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at—*
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.



First Edition—1000 Copies
Price—Rs. 150.00



*Printed by—*
**Ratna Printing Works**
B 21/42 A, Kamachha,
Varanasi-221 010.

योगतन्त्र-ग्रन्थमाला
[ २० ]

श्रीमत्परमहंस-परिव्राजकाचार्य-श्रीरामानन्दनाथशिष्य-
कविमण्डनश्रीशम्भुभट्टेति पूर्वाश्रमाभिधानवता
श्रीशङ्करानन्दनाथेन विरचितः

# सुन्दरीमहोदयः

कुलपतेः श्रीवेङ्कटाचलस्य 'शिवसङ्कल्प'-पुरोवाचा
पुरस्कृतः

*सम्पादकः*
**डॉ. रुद्रदेवत्रिपाठी**
भूतपूर्व-प्राध्यापको विभागाध्यक्षश्च,
अनुसन्धानविभागस्य
नवदिल्लीस्थ-श्रीलालबहादुरशास्त्रि-केन्द्रिय-संस्कृतविद्यापीठे
निदेशकश्च,
उज्जयिनीस्थ-बृजमोहन-बिरला-शोधकेन्द्रस्य



वाराणस्याम्

२०५० तमे वैक्रमाब्दे · १९१५ तमे शकाब्दे · १९९३ तमे खैस्ताब्दे

*अनुसन्धानप्रकाशनपर्यवेक्षकः —*
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

■

*प्रकाशकः —*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१ ००२.

■

*प्राप्तिस्थानम् —*
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१ ००२.

■

प्रथमं संस्करणम्, 1000 प्रतिरूपाणि
मूल्यम्—१५०=०० रूप्यकाणि

■

*मुद्रकः —*
**रत्ना प्रिंटिंग वर्क्स**
बी २१/४२ ए, कमच्छा,
वाराणसी-२२१ ०१०.

# शिवसङ्कल्पः

अथायं प्रसिद्धो हि प्राणिनां लोकयात्राक्रमो यदिह मनुष्ययोनौ जाताः प्रेक्षावन्तो जनाः प्रपित्सन्ते प्रेयश्च श्रेयश्च, व्याप्रियन्ते चानुक्षणं साक्षात्परम्परया वान्यतर-प्राप्तये । तामेनां मानवसाधारणीं प्रवृत्तिमभिलक्ष्यैव श्रूयतेऽयमार्षः समुद्घोषः कठवल्लीषु—

**श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।**
**श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते ॥**

अत्र 'धीर' इति 'मन्द' इति च द्वेधा विभजते कृत्स्नं मनुष्यगणं कल्याणी मातृकल्पा श्रुतिः । विभक्तयोश्च तयोः स्वरूपलक्षणमपि संव्यनक्ति सैव भगवती श्रुतिस्तत्रैव; य एतेऽस्मिन् लोके मनुष्येषु भूयिष्ठभाजः पराग्दर्शनशीला बहिर्मुखास्ते हि नाम मन्दा इति, यश्चासौ मनुष्याणां सहस्रेषु कोटिकोटिषु वा उत पारेपरार्द्धमेव वा कदाचित् क्वचित् कश्चिज्जनिं लभतेऽन्तर्मुखः प्रत्यग्द्रष्टा, स एव च धीर इति—

**कश्चिद् धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्** । इति ।

तदेतदमृतत्वं महाफलं स्वयं प्राप्तुं परेभ्यो वितरीतुं च बद्धपरिकरैर्भारतीयैः प्राचीनैः ऋषिशब्दमहितैरन्तर्दृष्टिचणैर्धीरपुङ्गवैर्ये शतधा सहस्रधा अथवा ततोऽपि बहुतरधा भिन्नाः पन्थानः प्रादर्शिषत, तेषां भवति मूलतो द्वयी प्रकृतिः—वैदिकी तान्त्रिकी चेति । तदिदं श्रेयोमार्गद्वयमपि स्पष्टं समसूच्येतद्ग्रन्थकारेणापि ग्रन्थोपक्रम एव उपासककर्तृकपूजाकर्मस्वरूपविवेचनप्रसङ्गे—"तमुपासकमधिकृत्य प्रातरुत्थान-प्रभृत्यासनविसर्जनान्तं **वैदिकं तान्त्रिकं** वा कर्मोपदिश्यते"— इति वदता । उभयमपीदं प्रवृत्तिनिवृत्तिपरतया पुनर्द्विविधमित्यन्यदेतत् । तत्र यथा वेदमूलकः श्रेयः साधनपथोऽनन्तप्रकारो विचित्राङ्गोपाङ्गकलापोपबृंहितः श्रौतगृह्यादिकल्पसूत्रेषु विततः, तथैवासावागममूलकस्तान्त्रिकः साधनप्रपञ्चोऽपि शैवशाक्तवैष्णवादिभेधभिन्नेषूच्चा-वचेषु तन्त्रग्रन्थेषु तथैव विचित्राङ्गोपाङ्गकलापोपबृंहितो वितत इत्यतिरोहितं सुधियाम् ।

तत्र तान्त्रिकेषु विचित्रेषु विभिन्नप्रस्थानेषु नानाप्रकारेषु साधनेषु मूर्धाभिषिक्तेव विराजते परमोच्छ्रितसोपानप्रतिष्ठिता श्रीविद्या, यस्यां किल **"राजविद्या राजगुह्यम्"** इति भागवतं वचः परमं सामञ्जस्यमश्नुते । कः सचेताः सन्दिग्धां विद्यानां राजेयं श्रीविद्येति घण्टाघोषे? कः पुनस्तं प्रत्याचष्टुमीहतामीष्टां वा? परमरहस्यत्वेन बहुतिथं कालमुपासकपरम्परासु संरक्षिता पुरातनीयं श्रीविद्यापद्धतिस्तत्त्वविदां

तन्त्रविदां चैकपुण्डरीकैः **श्रीशङ्करभगवत्पादैः** परां प्रतिष्ठां गमिता सम्प्रत्यपि तन्मठेषु अविच्छिन्नसम्प्रदाया प्रतितिष्ठतीति नेदमविदितं पारोवर्यविदाम् ।

अस्मिन्नपि ग्रन्थे सन्ति प्रकरणानि यत्र ग्रन्थकर्ता श्रीशङ्करानन्दनाथो न केवलं **श्रीशङ्करभगवत्पादान्** आचार्यशब्दग्राहमुल्लिखति; किन्तु तन्त्रसिद्धान्तसारसर्वस्वायमानायास्तत्प्रणीतायाः **सौन्दर्यलहर्या** वाक्यजातं स्वाभिमतसिद्धान्तव्यवस्थायां प्रमाणत्वेनोद्धरति त्रिषु सन्दर्भेषु । तथा हि–

(१) श्रीचक्रलेखनप्रसङ्गे ग्रन्थकर्त्रा यन्निर्णीतं वृत्तद्वारनिरपेक्षं भूसदनत्रयमेव स्वरूपनिष्कर्ष इति तत्र "वसुदल-कलाब्ज-त्रिवलयत्रिरेखाभिः सार्द्धम्" इति वचनं प्रमाणीकरोति ।

(२) श्रीयन्त्रप्रतिष्ठाविधिवर्णनं परिसमाप्य तत्र बिन्दुरूपस्य कामेश्वरस्वरूपे सर्वानन्दमयचक्रे कामेश्वर्याः प्रतिष्ठापनस्य रहस्यं विवरीतुमिच्छन् लेखकस्तत्र **कादिमतं दक्षिणामूर्तिसंहितां** चोद्धृत्य अन्ते पुनः "शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयाम्" इत्याचार्योक्तिं तत्र शेखरयति ।

(३) एवमेव ग्रन्थादावेव स्वाधारभूतं **ज्ञानार्णव**ग्रन्थमनुसरन् द्वादशभेदभिन्नां श्रीविद्यां यथायथमुपवर्ण्यान्ते तेषु द्वयोरेव भूयोऽनुष्ठानेन प्राधान्यं निर्णिनीषन् आचार्यप्रणीतां **सौन्दर्यलहरी**मेव प्रमाणयति लोकस्थितौ–"**श्रीमदाचार्यैश्च सौन्दर्यलहर्यां** विद्याद्वयस्यैवोद्धारेण तत्रैवानुष्ठानबाहुल्यदर्शनतो विद्याद्वयमेव मुख्यम्" । एवं यद्यप्याचार्यप्रणीतस्वतन्त्रशास्त्रपरम्परायां नितान्तविख्यातः **प्रपञ्चसार**ग्रन्थोऽत्र नोद्धृतस्तथापि तत्सङ्ग्रहरूपो **गीर्वाणेन्द्रसरस्वती**प्रणीतः **प्रपञ्चसार-सारसङ्ग्रहो** बहुशः प्रमाणीकृतः श्रीशङ्करानन्दनाथेनेत्यवधेयं सुधीभिः । इत्थमेव शाङ्करमठेषु प्रथमं शृङ्गेरीपीठं महता वैभवेनाधिष्ठितवतां **श्रीविद्यारण्य**स्वामिनां **श्रीविद्यार्णव**ग्रन्थोऽपि शङ्करानन्दनाथेन समुद्धृतः प्रमाणत्वेन सकृत् श्रीयन्त्रलेखनप्रसङ्गेऽनुपदमुल्लिखिते ।

शङ्करानन्दनाथ इति दीक्षानामभागयं ग्रन्थकारः शास्त्रेषु निष्णातो विशेषतः पूर्वमीमांसायां कूलङ्कषपाण्डित्यवित्तो मीमांसकधुरन्धरस्य **खण्डदेवस्य** शिष्यो वाराणसीवास्तव्यो गुरोः खण्डदेवस्य **भाट्टदीपिकायाः** प्रसिद्धो व्याख्याता **शम्भुभट्ट** इति ग्रन्थस्यास्यास्माद् विश्वविद्यालयात् प्रकाशनं महतीमौचितीं बिभर्ति । ऊरीकृतं चास्य ग्रन्थस्य सम्पादनकार्यं चास्मत्सुहृद्भिः **डॉ. रुद्रदेवत्रिपाठिभिः** इति च भूयिष्ठमुपचीयते ग्रन्थप्रकाशनौचिती, यतो हीमे न केवलं तन्त्रशास्त्रेषु कृतभूरिपरिश्रमाः, किन्तु प्राप्तदीक्षा अपि श्रीविद्यायाम् । सरस्वतीभवनस्थामेकामेव मातृकामवलम्ब्यायं ग्रन्थः सम्पादनीयः समापतित इति लिपिकारप्रमादादीनां सर्वेषां परिमार्जनमतिदुष्करमिति को वा न जानाति मातृकादोषकण्टकशोधनलब्धवर्णो विद्वान् ? क्वचिदक्षरभ्रंशः, क्वचिन्मात्राविकृतिः, क्वचिदस्पष्टवर्णविन्यासः, क्वचिद्वाक्यांशविच्युतिः, क्वचित्पङ्क्तिसंपातः, क्वचिदन्यदेव किञ्चिदिति दुर्गमे जाते

मातृकागहनसंचारमार्गे विशुद्धग्रन्थस्वरूपनिर्धारणे भवत्येक एवालम्बो भूयोमातृकासन्तोलनं नाम । असत्यपि तादृशेऽवलम्बे पण्डितवर्यैः सम्पादकैर्वैदुष्यपरिश्रमावलम्बद्वयमाश्रित्य साधितं साधु सम्पादनमिति धारयति कार्तज्ञ्यं नो विश्वविद्यालयस्तेभ्यः ।

**ग्रन्थकारः शम्भुभट्टाभिधः श्रीशङ्करानन्दनाथः**

यद्यपि खण्डदेवकृत**भाट्टदीपिकाटीकायाः** शम्भुभट्टीयत्वेन पण्डितगोष्ठीषु जागर्ति महती प्रसिद्धिः, तथापि मीमांसकश्रेष्ठस्यास्य तन्त्रशास्त्रेऽथवा तन्त्रसाधनेऽप्यस्ति काचिद् विशिष्टा प्रतिष्ठेति प्रायशो न परिचिन्वन्ति विद्वांसः । अत एवास्योभयशास्त्रपाण्डित्यविषये नूनं विमर्शनीयं विद्वद्भिः । वयन्त्वत्र प्रकृतग्रन्थमात्रमाश्रित्य यथोपलम्भमीषद्विमृशामः ।

लेखकोऽयं जैमिनीये मीमांसाशास्त्रे परिनिष्ठितः पण्डितोऽभूदिति, निसर्गतश्चारंस्तास्य मनो मीमांसान्यायेष्विति चास्त्यवसरोऽभ्यूहितुम् । यद्यपि श्रीविद्योपासनापद्धतिविवरणात्मकेऽस्मिन् ग्रन्थे नास्ति भूयानवसरोऽस्य मीमांसाप्रज्ञायाः प्रयोगायेति स्पष्टमेव, तथापि मीमांसान्यायकोविदोऽयं पदे पदे वाक्यार्थनिर्णयप्रसङ्गेषु तांस्तान् मीमांसान्यायान् संचारयत्येव । प्रसिद्धा हीयं लोकमर्यादा नैसर्गिकी यद्, यो हि यस्मिन् शास्त्रेऽक्षरज्ञानमात्रात्मकानि पूर्वसोपानान्यतिक्रम्य तस्मिन् रसानुभवरूपं चरमसोपानमधिरोहति, स निसर्गत एव रसभावमापन्नस्तन्मयीभूत इव सर्वं तद्दृष्ट्यैव पश्यति । विशेषतश्चेदं सङ्गच्छते मीमांसायाम् । मीमांसा हि वाक्यशास्त्रमिति प्रसिद्धिः । अत एव स्वरसतः समुच्छलति कस्यापि मीमांसारसिकस्य प्रवृत्तिः सर्वत्र वाक्यार्थविचारेषु सर्वपथीनान् तच्छास्त्रन्यायानवतारयितुम् । अस्मिन् **सुन्दरीमहोदयेऽपि** सन्ति भूयांसः सन्दर्भा यत्रासौ तन्त्रशास्त्रसञ्चारी शङ्करानन्दनाथः क्षणं शम्भुभट्टीभूयेव तन्त्रपथेष्वपि संयुनक्ति मीमांसापद्धतिमिति विस्मयावहं स्यात् सहृदयानाम् । तदत्र कानिचित् स्थलानीदृशानि निदर्शयामः ।

१. **कादिमत-ज्ञानार्णव-यामला**नुसारेण श्रीयन्त्रभेदानां त्रैविध्यं स्पष्टीकृत्य **विशुद्धेश्वरतन्त्रा**नुसारेण चतुर्थं भेदमुपक्षिप्य तदनन्तरं मीमांसायां प्रसिद्धं शाखान्तरोपसंहारन्यायमाश्रित्य शङ्कामुत्थापयति 'आग्नेयं चतुर्द्धा करोति' इतिवदत्रापि **ज्ञानार्णवा**दिवाक्यानि **विशुद्धेश्वरतन्त्री**यवाक्योपसंहारेण व्याख्याय सर्वसमन्वयेन एकमेव यन्त्रं पर्यवस्यतीति । तत्र च मीमांसारहस्यवित् समाधत्ते, नात्र तस्य न्यायस्य युक्तोऽवतार इति । शास्त्रस्थितिं व्याचक्षाणो लिखति – "**सामान्यविधिरस्पष्टः संहियेत विशेषतः** इति न्यायेन अस्पष्टानां विशेषाकाङ्क्षिणामेवोपसंहारस्य मीमांसकैः स्वीकारात् " – इति ।

२. द्वितीयोल्लासे पञ्चदशी-षोडशीभेदेन श्रीविद्याया द्वैविध्यमुल्लिख्य तत्राद्याया द्वादशभेदान् षोडश्याश्चतुर्भेदांश्चोपपाद्य तत्र षोडश्यां पञ्चदश्यां च इतिकर्तव्यता-विषये मीमांसाक्रमरीत्या पञ्चदशाक्षर्यां बालाविद्यातोऽतिदेशेन प्राप्तानां धर्माणा-मलोपसाधनार्थं **कृष्णलावघातन्यायम्**, मुख्यषोडश्यां विहितानां धर्माणां केवलं तत्रैवानुष्ठानं साधयितुं च पुनः **उपहोमन्यायं** चाश्रयति मीमांसाशास्त्रनिष्णातः पूर्व-तन्त्रे शम्भुभट्ट इति विख्यातोऽयं शङ्करानन्दनाथ इति तन्त्रदीक्षानामभाक् ।

३. अनेन महाभागेन ग्रन्थारम्भे कृतं पूजालक्षणमप्यस्य मीमांसामार्गरसिकतामेव निदर्शयति । निभाल्यतामस्य मीमांसावासनारञ्जितमतेः पूजालक्षणम्–"पूजा च यागादिव्यावृत्तो धूपदीपादिकरणको देवतोद्देशेन द्रव्यत्यागसमूहः । देवतापदं च देवतागणान्तःपातिरूढिदेवतापरम् । तेन श्राद्धीयद्रव्यत्यागे नातिव्याप्तिः" इति । अग्रे च जपस्य स्वतन्त्रफलसत्त्वेऽपि पूजाङ्गत्वं साधयितुं पुनर्मीमांसासरणिमेवाश्रयन् चयनस्य यागाङ्गत्वं दृष्टान्तीकरोति ।

४. पूजायां कलशस्थापनविषये च मतभेदनिराकरणप्रसङ्गेऽपि 'कलश'शब्दपाठे जैमिनीयम् **अनोवासाधिकरणन्यायं**, 'कलश'-शब्दस्थाने 'सकल'-पाठेऽपि "उपरि हि देवेभ्यो धारयति" इत्यत्रेव विधिकल्पनेन कुमारी-सुवासिनी-सामयिकपूजाव्यवस्थां सम्पादयति मीमांसामार्गेण ।

इदञ्चानुपदकृतमुदाहरणजातं स्थालीपुलाकन्यायेन । सन्त्यन्येऽपि बहव ईदृशाः प्रसङ्गाः शङ्करानन्दनाथस्य मीमांसाशास्त्रवासनावासितं लेखनमादर्शयितुम् । किञ्च, समग्रेऽपि ग्रन्थे ग्रन्थकृदयं पदे पदे मीमांसकानामेकवाक्यतामूलां वाक्यार्थ-निर्णयपद्धतिमाश्रयत्येव । विशेषतश्चास्य ग्रन्थस्य मुख्यांधारत्वेन स्वीकृतस्य **ज्ञानार्णव**तन्त्रसन्दर्भाणां **दक्षिणामूर्तिसंहिता**सन्दर्भैस्तन्त्रान्तरगतैः समानप्रकरणस्थैः सन्दर्भैश्च एकवाक्यतामाश्रित्य तात्पर्यमवधारयतीति ग्रन्थपरिशीलनेन विदाङ्कुर्वन्तु पाठकाः ।

इदमन्यदप्यत्रावधेयम् । लेखकस्यास्य मीमांसाशास्त्रप्रतिष्ठाया एवायं परिणामो यदयं श्रीविद्यातत्त्वसाधनादिसम्बद्धान् प्रकटान्वा गूढान्वा नानाविषयान् परीक्षमाणः, तद्विषये च बहुषु आगमग्रन्थेषु पूर्वाचार्यप्रणीतेषु प्रकरणग्रन्थेषु च आपाततः प्रतिभासमानानाम्, अन्यथा वा लेखकव्याख्यातृप्रमादादिकृतानां बहुविधानां परस्परविरोधादीनां परिहारविधाने सर्वथा नोद्विजते, न वा क्लिश्यते । प्रत्युत सहजां मीमांसासरणिमाश्रित्य यथासम्भवं समन्वयं वा स्थापयति, विरोधं वा प्रशमयति, अन्यथा वा व्याचष्टे प्रतीयमानमापातविरोधं, मण्डयति वा शास्त्रीयं स्वपक्षं, दृढं वा खण्डयति शास्त्रसम्प्रदायाननुगतं प्रतिपक्षं, किं बहुना, यथायथं सर्वत्र तत्त्वव्यवस्थां साधीयसीं सम्पादयतीत्यहो अस्य मीमांसाशास्त्रप्रज्ञाया बहुपथीनो विलासः । एतादृशस्य मीमांसकधुरन्धरस्य श्रीविद्यासाधकाग्रेसरस्य तान्त्रिकग्रन्थ-

जालेऽपि स्वेच्छाविहारिणोऽस्य विदुषस्तन्त्रशास्त्रव्याख्याने श्रीविद्यातत्त्वावगाहने च सञ्जातयानया अपूर्वप्रवृत्त्या मन्यामहे, महदुपकृतं तन्त्रागमस्येति । दैवयोगेन वा तस्या एव महात्रिपुरसुन्दर्याः कृपानुग्रहेणैव वा यदृच्छोपनतादस्मादपूर्वशास्त्रद्वयसमागमाद् अविमुक्ताख्येऽस्मिन् वाराणसीपुण्यक्षेत्रे समुद्भूतोऽयं ग्रन्थः श्रीविद्यातत्त्वजिज्ञासूनां तत्साधकानां च कल्पिष्यते महते कल्याणायेति महांश्चायमभ्युदयो भवेत्समेषामिति च दृढं विश्वसिमः । ईदृग्विधमेवाभ्युदयं मनसि निधायास्य ग्रन्थतल्लजस्य लेखको ग्रन्थस्यास्य '**सुन्दरीमहोदय**' इति नामाकार्षीदिति युक्तमुत्पश्यामः ।

अनुपदोल्लिखितविरोधपरिहारसंगतिस्थपनादीनां विशेषाणां यद्यपि सन्ति पदे पदे भूयांस्युदाहरणानि ग्रन्थेऽस्मिन्, तथापि विस्तराद् बिभ्यतो वयं तेषु कतीनाञ्चित्सङ्केतमात्रेणैव परितोषमेष्यामः । तथा हि–

(१) श्रीयन्त्रस्य लेखने सप्तविधसंप्रदायप्रकाराणां विवेचनप्रसङ्गे ४६- तमे पृष्ठे **विशुद्धेश्वरतन्त्र**प्रतिपादितस्य श्रीयन्त्रस्य **ज्ञानार्णवीयाद्** यन्त्राद् भेदस्थापनम् । तदर्थञ्च "**सामान्यविधिरस्पष्टः संहियेत विशेषतः**" इति न्यायेनात्र शाखान्तरोपसंहारन्यायस्य अप्रसारनिरूपणम् ।

(२) ततः पूर्वं ४४-तमे पृष्ठे यन्त्रबाहुविध्यविवरणप्रसङ्ग एव **कादिमत-ज्ञानार्णव**योर्मध्ये चतुर्दशान्तयन्त्रे भेदाभावनिर्णयः ।

(३) ४२-तमे पृष्ठे **सौभाग्यरत्नाकर**ाभिमतायां वृत्तव्यवस्थायां सत्यामपि तट्टीकायां **मनोरमायां** चक्राद् बहिर्निर्मेय**षड्वृत्तविवरणे** कृतस्य बहिःशब्दव्याख्यानस्य अनौचित्यनिरूपणमुखेन टीकापक्षस्य अनभ्युज्ञानम् ।

(४) ५२-५३-तमे पृष्ठद्वये मेरुनिर्माणविषये ग्रन्थसन्दर्भेषु विद्यमानानां सर्वेषामापातविरोधानां समाधानपुरःसरं व्यर्थत्वेन प्रतिभासमानानां वाक्यानां च महता कौशलेन संरम्भेण च यथावत्परिहारमभिधाय 'सर्वं सुस्थम्' इत्युपसंहारः ।

(५) ३५-तमे पृष्ठे एकस्मिन्नेव सन्दर्भ आदौ 'गुरुम्' इत्येकवचनेन पश्चाच्च 'गुरून् नत्वा' इति बहुवचनेन च प्रयोगस्य सामञ्जस्योपपादनम् ।

(६) पुनश्च तत्रैव पृष्ठे **ज्ञानार्णवे**ऽनुक्तस्यापि रक्तासनस्य **दक्षिणामूर्ति-संहितोक्तस्य** विरोधाभावेन एकवाक्यताबलात् स्वीकारः ।

(७) एवंमेव १४२-तमे पृष्ठेऽपि पुरश्चरणहोमप्रकरणे **ज्ञानार्णवा**नुक्तस्य प्रणवेन प्रोक्षणस्य **दक्षिणामूर्तिसंहितो**क्तिबलादेवोपसंहारः । पुनश्च तत्रैव पृष्ठे ज्ञानार्णवस्थ-'सकामा'-शब्दस्यार्थनिर्णये **दक्षिणामूर्तिसंहितै**कवाक्यताया आश्रयणम् ।

(८) ७३-तमे पृष्ठे गणेशन्यासक्रमे 'विघ्नेश्वरश्रीभ्याम्' इति केषाञ्चित् समस्तप्रयोगः, 'विघ्नेश्वराय श्रियै" इति च केषाञ्चिद् व्यस्तप्रयोग इति ग्रन्थद्वैधे **ज्ञानार्णवी**यसन्दर्भान्तरप्रमाणस्वारस्यावष्टम्भेन तदनुगुणतर्कबलेन च समस्तपद-प्रयोगस्यौचित्यव्यवस्थापनम् ।

(९) २७-तमे पृष्ठे पञ्चसिंहासनस्थापनप्रस्तावे **ब्रह्माण्डपुराणे** चतसृषु विदिक्षु तत्स्थापनोल्लेखः **ज्ञानार्णवे** च चतसृषु प्रधानदिक्षु स्थापननिर्देश इत्युपस्थिते विरोधे शास्त्रीयोल्लेखानुगुणं पुराणस्य नयनार्थं तत्र लक्षणाश्रयणेन कथमपि सामञ्जस्यस्थापन-प्रयासः ।

(१०) १४६-१४७ -तमयोः पृष्ठयोः पुरश्चरणहोमे काम्यद्रव्याणां गणनपरे **ज्ञानार्णवसन्दर्भे** द्राक्षाया निर्देशद्वये पौनरुक्त्यशङ्कासमाधानार्थं, तत्रैव प्रथमं कुङ्कुममुक्त्वा पुनस्तत्पर्यायस्य घुसृणस्य वचनेन पौनरुक्त्यपरिहारार्थं चेत्थं व्यवस्थापनम्–"द्राक्षाफलं समग्रं स्यादि"त्यत्रापक्वमार्द्रं द्राक्षाफलं गृह्यते, "द्राक्षा गुग्गुलसंख्याकेत्यत्र तु पक्वं शुष्कमिति भेदः । कुङ्कुमघुसृणयोर्भेदस्तु जातिभेदकृत इति ।

(११) ७४-तमे पृष्ठे नवग्रहन्यासे ग्रहाणां ध्येयस्वरूपविषये देवीसाहित्यविषये च बहुपुस्तकसंवादाभावेऽपि सम्प्रदायाभिज्ञवचनप्रामाण्यात् तत्पक्षस्वीकारः ।

(१२) तथैव च ८१-तमे पृष्ठेऽपि अन्तर्नवयोनिन्यासप्रसङ्गे नवचक्रन्यासानन्तरं चक्रदेवतान्यास इति मतस्य ग्रन्थानुगतत्वाभावेऽपि सम्प्रदायाभिज्ञानां प्राचीनपद्धति-काराणां वचनेन प्रामाण्याभ्युपगमेऽपि स्वपक्षस्य साधीयस्त्वस्थापनम् ।

तदेवं सन्त्येव ग्रन्थेऽस्मिन् प्रसङ्गा बहव ईदृशा मीमांसादिशास्त्रसंस्कारानुगतेषु नैकेषु वादसन्दर्भेषु । यानि कानिचिदत्र अशोकवनिकान्यायेन मया चार्चितानि, तान्युपलक्षणमात्राणीत्यवधारयन्तु सुधियः पाठका इति दिक् ।

**पाण्डित्याभिमानः – स्वोपज्ञचिन्तने स्वातन्त्र्यम्**

शास्त्रेष्वीदृशमलौकिकं कूलङ्कषं पाण्डित्यं येषु भवति, ते प्रायशो स्वविद्या-भिमानिनो भवन्तीति नैसर्गिकी लोकस्थितिः । नियतेरस्या नाभूदपवादोऽसौ ग्रन्थकारः श्रीशङ्करानन्दनाथोऽपि । इदमपि ग्रन्थेऽस्मिन् तत्र तत्र प्रस्फुरत्येव, यत्रासौ पूर्वाचार्यमतानि खण्डयति साटोपम्, स्वीयं वा पक्षं स्वोपज्ञसिद्धान्तत्वेन प्रस्तौति । अत्रापि कतिचित्स्थलसङ्केतेनैव सन्तोष्टव्यं भवति सहृदयैः पाठकैः । तथा हि –

(१) ३०-तमे पृष्ठे चैतन्यभैरवी-मन्त्रस्वरूपोन्मीलने "रुद्रार्णा परमेश्वरी" इति विशुद्धं मूलग्रन्थपाठं मन्त्रशास्त्रपरिभाषानुसारं सम्यग् व्याख्याय तत्र केषाञ्चित् पूर्वविदुषां पक्षस्य असाधुत्वं प्रतिजिज्ञासोरभिमानिनो लेखकस्य "यत्तु रुद्रार्णेति स्थाने रुद्राणीति पाठभ्रमेण रुद्राणीभैरवीति नामलिखनं बहुषु पद्धतिपुस्तकेषु तन्निर्मूलम्" इति साभिनिवेशं खण्डनम् ।

(२) ६१-तमपृष्ठस्थोऽयं स्वपक्षसौष्ठवनिर्बन्धख्यापकः सन्दर्भः – "एवं स्थिते न्यायलभ्येऽर्थे बहुषु प्रामाणिकपुस्तकेषु अनुकूलतया पाठे सत्यपि व्याख्यानापाटवेन कलशमित्यस्य स्थाने सकलमिति वैपरीत्येन पठन्ति तन्निर्मूलं साहसम्" इति ।

(३) ७५-तमे पृष्ठे नक्षत्रन्यासे ळकारसाहित्याभावे सिद्धेऽपि "यत् पद्धतिकाराणां ळं क्षं अं अः लिखनं तन्निर्मूलमिति ज्ञेयम्" इति पद्धतिकारन्यक्कारः ।

(४) ७७-तमे पृष्ठे पीठन्यासप्रकरणे पञ्चाशदेकपञ्चाशत्त्वसंख्याविवादमवतार्य तत्र मूलपाठे 'महापीठम्' इत्यस्य स्थाने 'प्रणवं च' इति पाठं प्रकल्पयतः, 'क्षं छायाछत्रपुरपीठाय' इति ळकारन्यासं कुर्वतश्च पूर्वलेखकान् कटाक्षयन् महता संरम्भेण प्रमाणमुपन्यस्य युक्तिबलेन एकपञ्चाशत्पीठपक्षं खण्डयति । (प्रसङ्गेऽस्मिन् 'अनुक्रमात्' इत्यस्य स्थाने उपक्रमोपसंहारैकरूप्यलाभाय 'उपक्रमात्' इति, 'सहस्रपाठे' इत्यस्य स्थाने 'सहस्रनामपाठे' इति चेह मुद्रितः पाठः शोधनीयः प्रतिभाति । 'प्राणधात्री' इतीह मुद्रितः पाठोऽपि चिन्त्यः प्रतिभाति, यतो हि 'प्राणदात्री' इत्येव साम्प्रदायिकः पाठः । तथैव च व्याख्यातः **सौभाग्यभास्करे** ललितासहस्रनामभाष्ये **भास्कररायै**रित्यवधेयं सुधीभिः ।)

**नैकहस्तलिखितसन्तोलनेन पाठशोधनपाटवम्**

आधुनिका विद्वांसः प्रायशोऽभिमन्यन्ते यत् प्राचीनग्रन्थानामनेकपाण्डुलिपिस्थपाठसमीक्षणेन मूलग्रन्थस्य यथार्थस्वरूपनिर्धारणप्रयोजना समालोचनपद्धतिः ('क्रिटिकल' इत्याङ्ग्लशब्देनाभिहिता) सर्वथा आधुनिकी पाश्चात्त्यविद्वदुपज्ञा अर्वाचीना कापि नवोन्मेषिता विद्येति, अस्माकं पूर्वमनीषिण एतदभिज्ञा नाभूवन्निति च । स्यात्काममस्याः पद्धतेर्विकासे प्रचयगमने च साम्प्रतिकैर्नवीनसाधनपौष्कल्यसाहाय्येन महदुपाकारि, भृशमुपाचायि च महत्त्वमस्याः; किन्तु प्राचीनैर्भारतीयैः कुशाग्रधिषणैर्विद्वद्भिर्नास्यां दिशि क्वचित्परिश्रान्तमिति, प्राचीनग्रन्थानां शुद्धपाठस्वरूपनिर्धारणे बहुतरहस्तलिखितपरीक्षणग्गर्गोऽपि कक्षीकरणीय इति न ते विविदुरिति वा कथनं तु महत्साहसम् । सन्ति बहवष्टीकाकारा यैरेष मार्गो बहुत्र समादृतः पाठनिर्धारणाय, यद्यपि भूयांसष्टीकाकाराः प्रामादिकानशुद्धान् हस्तलिखितपाठान् स्वबुद्ध्यैव परिवर्त्य स्वकपोलकल्पितान् शुद्धपाठानचीक्लृपन् । प्रकृतग्रन्थलेखकेन शङ्करानन्दनाथेन तु शुद्धपाठनिर्णयार्थं यावदुपलम्भं बहवो हस्तलिखितग्रन्थाः परीक्षिता इति निश्चप्रचम् । अनेन हि पण्डितश्रेष्ठेनास्मिन् ग्रन्थे बहुधा बहुशश्च प्रमाणीकृतं यदेतद्ग्रन्थप्रणयने **ज्ञानार्णव-दक्षिणामूर्तिसंहिताप्रभृतीनां** मूलग्रन्थानां नैकाः पाण्डुलिपीस्तौलनिकसूक्ष्मेक्षिकया समीक्ष्यैव मूलान् शुद्धपाठानसौ निश्चिकायेति ।

सन्त्यत्र **'सुन्दरीमहोदये'** पञ्चषाः सन्दर्भा यत्रानेन नैकहस्तलिखितपरीक्षणमूला पाठसमालोचनपद्धतिरपि समादृतेति स्पष्टं सिद्धं भवति । परीक्ष्यन्तामिमानि त्रीण्युदाहरणानि स्थालीपुलाकन्यायेन—

(१) "तद् बाह्ये देवदेवेशि त्रिवृत्तं मातृकान्वितम्" इति श्लोक उपरिलिखितो मूलपुस्तके क्वचिद् दृश्यते; परन्त्वक्षरलिखनप्रकारस्य मूलकृता कस्मिंश्चिदपि चक्रेऽनभिधानाद् अप्रस्तुतमातृकान्वितत्रिवृत्ताभिधानस्यासङ्गतत्वप्रतीतेः, **बहुषु पुस्तकेषु अनुपलब्धेश्च** कल्पित एव प्रतीयते । (पृ. ४३)

(२) अत्र मूले रव्यादीनां वामोरुन्यस्तदक्षकरवरप्रदत्वध्यानं तथा वराभयप्रद-रेणुका-ऽमृता-धात्री-शङ्खिनी......देवीसाहित्यं **बहुषु पुस्तकेषु न लभ्यत** इति मया नोक्तम् । सम्प्रदायाभिज्ञैस्तु लिखितं पद्धतिपुस्तकेषु । तेनानुमीयते प्रायो मूलग्रन्थस्त्रुटितः । (पृ.७४)

(३) अस्मिन् ग्रन्थे "षट्कूटा शाङ्करी भवेद्" इत्यस्याग्रे "....विदाङ्कुर्वन्त्यास्तिक-भावाः" इति सन्दर्भः । (पृ. ८)

किञ्चान्यत् । शुद्धपाठनिर्धारणे बहुधा व्याप्रियमाणेनानेन न केवलं नैकहस्तलिखितग्रन्थसाहाय्यमवलम्बितं किन्तु स्वमूलग्रन्थस्य **ज्ञानार्णवस्य** पाठसंशये समुत्थिते समानविषयकग्रन्थान्तरस्य निर्मितसितग्रन्थस्य द्वितीयाधारत्वेनोरीकृताया **दक्षिणामूर्ति**संहितायाः, ग्रन्थान्तराणां चावलम्बोऽपि बहुधा आश्रित एवानेन तन्त्र-गह्वरेषु निखिलेष्वपि स्वेच्छासञ्चारिणा शङ्करानन्दनाथेन । सत्स्वप्यस्योदाहरणेषु भूयिष्ठेष्वेकेनैवोदाहरणेन सन्तोष्टव्यमिह । तथा हि—

नवचक्रेश्वरीमन्त्रोद्धारप्रसङ्गे **ज्ञानार्णव**ग्रन्थे सर्वथार्थसङ्गतिवर्जितं पादमेकं परित्यज्य तत्स्थाने **दक्षिणामूर्तिसंहिताधृतं** पाठं स्वीकृत्य संशोधनमीदृशं स्वकृतं व्याचक्षाण इत्थमाचष्टे पाठशोधनपथसंचारपटुरयम्— "अनयात्मासनं दद्याद्" इत्यस्याग्रे "सुन्दर्याः परमेश्वरि" इति संहितोक्त एव पाठो युक्तो योग्यत्वात्, न तु "त्रिपुरेश्याः षडङ्गकम्" इत्यसङ्गतार्थ इति ध्येयम् ।

**श्रीविद्यासम्प्रदायनिष्ठा, गुरुभक्तिश्च**

एतादृशस्य साधकाग्रेसरस्य सम्प्रदायज्ञानविषये गुरुभक्तिविषये च नाधिकं वक्तव्यम्, यतो हि साधनप्रधानासु तन्त्रादिविद्यासु सम्प्रदायानुगमं गुरुभक्तिं च विना साधकः साधनपथे पदमेकमप्यग्रे गन्तुं नालं भवतीत्यतिरोहितं तन्त्ररहस्यविदाम् । ग्रन्थोऽयं पदे पदे इदं प्रमाणीकरोति यदस्मिन् साधकधर्मेषु नित्यगुणत्वेन गणितं द्वितयमपीदमानखशिखं प्रतिष्ठितमिति । तदीदृशः स्फीतालोकप्रकाशितो निःसन्दिग्धो विषयो निगदव्याख्यात इति नापेक्षते पराक्रमं कमपि । इयन्मात्रं विशेषतो निगाद्यं भवति यदसौ शङ्करानन्दनाथो न केवलं स्वसम्प्रदाये निरूढः, किन्तु सम्प्रदायान्तरेष्वपि परं प्रवीणोऽभूदिति । अत एव तत्र तत्र स्वसम्प्रदायभिन्नान् द्रविडकश्मीरादिसम्प्रदायानपि बहुधा बहुशो वितत्य प्रदर्शयतीत्यवधेयम् ।

**श्रीशङ्करानन्दस्य जीवनसमयावधारणम्**

अथायं शाक्तोपासकाग्रेसरः, तन्त्रशास्त्रे निष्णातः पूर्वमीमांसाशास्त्रेऽपि प्राप्तप्रतिष्ठः श्रीशङ्करानन्दनाथः कदेमां भारतभुवमलञ्चकारेति विषये किञ्चिद्विमृश्यते । यद्यपि पण्डितवरैः सम्पादकैः काव्यनिर्माणेऽपि कुशलैः डॉ. रुद्रदेवत्रिपाठिभिरस्मिन् विषये सूक्ष्मः कश्चन सङ्केतः कृत एव, तत्राप्यस्मिन्विषयेऽस्य विश्वविद्यालयस्य सरस्वतीभवनपुस्तकाध्यक्षैर्योगतन्त्रागमविभागस्य प्रथमाध्यक्षैरध्यात्मविद्यायां परमसाधकत्वेन काश्यां प्राप्तप्रतिष्ठैः **महामहोपाध्याय-गोपीनाथकविराजैः** कृतेन निर्णयेन स्वपक्षः प्रमाणीकृतश्च, तथापि प्रश्नोऽयं सर्वथा पुनश्चिन्तनमर्हति निष्कर्षविधानायेति स्थूणानिखनन्यायेनात्र पुनर्विमर्शनदिङ्मात्रं प्रदर्श्यतेऽस्माभिरतिविस्तराद् बिभ्यद्भिः ।

तत्र सम्पादका अस्य लेखकस्य भास्कररायसमकालत्वं, मीमांसकधुरन्धरस्य खण्डदेवस्य शिष्यत्वं चोल्लिखन्तः स्वपक्षमित्थमुपसंहरन्ति–"मीमांसाविषयकाः केचन ग्रन्था अपि श्रीमता शङ्करानन्दनाथेन विरचिता इति स्वीये 'तान्त्रिकसंस्कृति'-नामके ग्रन्थे महामहोपाध्यायगोपीनाथकविराजा असूचयन् । तैरेवैतेषां ग्रन्थप्रणेतृणां समयो यीशोः १७०७ संवत्सरासन्नः सूचितः" इति ।

अत्रेदं वक्तव्यम्–श्रीविद्याया "मार्गदर्शी महर्षिः" तस्यां प्राप्तचरमसिद्धिः सर्वतन्त्रस्वतन्त्रः पुण्यश्लोकः श्रीभास्कररायो जन्मना दाक्षिणात्यः काश्यामप्यधीतविद्यः पुण्यतीर्थेऽस्यां काश्यां सुचिरं न्यवात्सीदिति, पण्डितगोष्ठीषु लोकोत्तरां प्रतिष्ठां च समचैषीदिति निर्विवादम् । तथैव श्रीशङ्करानन्दनाथोऽपि काशीमेवाध्यवात्सीदिति, ग्रन्थमेनमत्रैव प्राणैषीदिति च विषयेऽस्त्येव ऐककण्ठ्यं विदुषाम् । किन्तूभयेषाममीषां काशीस्थितौ यौगपद्यविषये पुनरस्त्यवकाशो विप्रतिपत्तेः । तथा हि–एकतस्तावत् श्रीमान् भास्कररायः **'सुन्दरीमहोदय'**-ग्रन्थमज्ञासीदिति निस्सन्दिग्धमेव, अपरतः शङ्करानन्दनाथो भास्कररायं वा तत्प्रणीतग्रन्थभूम्नि एकमपि वा ग्रन्थमद्राक्षीदिति, नाममात्रतोऽवेदीदिति वा अनुमातुं नास्ति प्रमाणगन्धोऽपि । प्रत्युत विपरीतमेवाभ्यूहितुमस्त्यवसरः । यदि नामासौ शङ्करानन्दनाथः परिचितोऽभविष्यद् भास्करीयग्रन्थैस्तर्हि ध्रुवमेव विवादपदेषु यत्रोभयोर्मतभेदो वा मतसाम्यं वाभूत् तेषु प्रसङ्गेष्ववश्यमुदलेखिष्यत्तत् खण्डनाय वा मण्डनाय वा यथासावितरेषां भूयसां ग्रन्थानां विषये करोति पदे पदे । न तु तथा उल्लिखति भास्कररायीयमेकमपि वा ग्रन्थं क्वचिदपि । तदिदं महत् प्रमाणमेतदुत्प्रेक्षितुं यच्छङ्करानन्दनाथो भास्कररायात् प्राक्कालिक इति ।

अयं भास्कररायः **'सुन्दरीमहोदय'**-ग्रन्थं तद्ग्रन्थकारञ्चाभिजज्ञे इति, तद्गतान् तदुपज्ञान्वा प्रातिस्विकान् मतविशेषान्, असाधारणान् सिद्धान्तविशेषांश्च सम्यक् परिचिकायेति, ग्रन्थमेनमामूलचूडं सूक्ष्मेक्षिकया परिशील्य समग्रमेव तं सहजया

मेधाशक्त्या प्रायशः प्रतिपदं यथातथं सस्मारेति, अत एव तत्र तत्र प्रसङ्गेषु तदंशानुज्जहारेति च शृङ्गग्राहिकया निर्णेतुमीषत्प्रमाणमुपन्यस्यते । यद्यप्येतदर्थं भास्कर- रायप्रणीतसमग्रग्रन्थावगाहनमपेक्ष्यते, न चास्माभिस्तथावगाढाः समे ग्रन्थास्तदीयाः; तथापि तदीयेन प्रसिद्धग्रन्थत्रयेणैवैतत् करतलामलकवत् सिद्धं भवतीति तावतैवात्र सन्तुष्यामः । विद्वद्भिः पाठकैर्भास्कररायीयग्रन्थान्तरेषु उपलभ्यमानानि ईदृशान्युल्लेखान्तराणि यथावकाशमन्विष्येरन्निति । तथा हि–

ललितासहस्रनामभाष्ये **सौभाग्यभास्कराभिधे**, सूर्योपासनपद्धतिव्याख्यानपरे **तृच-भास्करे** नित्याषोडशिकार्णवव्याख्यानरूपे **सेतुबन्धग्रन्थे** च भास्करराय: **सुन्दरीमहोदयं** तत्कर्तारं श्रीशङ्करानन्दनाथं च नामग्राहमुल्लिखत्यनेकशः । तथा हि–

(१) **ललितासहस्रनामभाष्ये** 'पञ्चाशत्पीठरूपिणी' इति नाम्नो व्याख्याने (श्लोकसंख्या-२०७) श्रीमन्तो भास्करराया नानाविधैः प्रमाणैः पञ्चाशच्छब्दस्यात्र एकपञ्चाशत्परत्वं संसाध्य **सुन्दरीमहोदयकारैः** एकपञ्चाशत्त्वखण्डनपुरःसरं साग्रहं निर्णीतं 'पञ्चाशत्संख्यावादं कटाक्षयन्तस्तन्मतं विस्तरशः प्रतिक्षिप्यान्ते इत्थमुपसंहरन्ति–"एतेनेदृशनामस्वारस्यात् पीठन्यासोऽपि क्षकारस्थानपरित्यागेन पञ्चाशत एवेति **सुन्दरीमहोदयकाराणां** लेखः साहसमात्रत्वान्नादर्तव्यः । .......अत एव **'कालेश्वरं महापीठं प्रणवं च जयन्तिका'** इति (सुलभावलोकनश्चायं सन्दर्भः प्रकृतग्रन्थे ७७-७८ पृष्ठयोः ) ।

(२) एवं **तृचभास्करे**ऽपि सकृत्स्मृतः **सुन्दरीमहोदयग्रन्थः** श्रीभास्कररायैः । अत्र तु श्रीशङ्करानन्दपक्षसंवादप्रदर्शनेनैव स्वपक्षमुपोद्बलयन्ति श्रीमद्भास्करराया इति ध्येयम् । एवं च बुभूषयिषयावतारितः **सुन्दरीमहोदयस्तृचभास्करे** भास्कररायैर्न तु ललितासहस्रनामभाष्य इव दुदूषयिषयेति विशेषः । तथा हि–स्वोपज्ञस्य **सुन्दरीमहोदयग्रन्थस्य** उपक्रमे तावत् प्रतिपादितं श्रीशङ्करानन्दनाथैर्यत् कादि-हादिविद्ययोरनुष्ठाने यद्यपि ज्ञानार्णवोक्तविधिमात्रावलम्ब एव यद्यपि पर्याप्तः, तथापि यावच्छक्ति तन्त्रान्तरोक्ताङ्गाद्यनुष्ठानं ज्याय इति । सोऽयमर्थः पूर्वोत्तर-मीमांसासिद्धान्तैः सम्यक् परिपोष्य परिष्कृत्य च यथायथमनूदितं नामग्राहं श्रीमद्भास्कररायैः स्वोपज्ञे सूर्योपास्तिपद्धतिग्रन्थेऽस्मिन् **तृचभास्करे** । **सुन्दरी-महोदयकर्त्रा** प्रसङ्गेऽस्मिन्नुद्धृतं **"बह्वल्पं वा स्वगृह्योक्तम्** ......" इत्यादिप्रमाणवचन-मपि तथैवोद्धृतं भास्कररायैर्ग्रन्थसहस्रेषु स्वेच्छासञ्चारप्रगल्भैर्महापण्डितैरिति यथा यथा अनुसन्धीयते, तथा तथा उपचीयते महिमा **सुन्दरीमहोदयस्य** । प्रसङ्गैरीदृशैरिदमपि स्फुटमवधार्यते यद् भास्कररायैः प्रामाणिकेषु परिगणितः शङ्करानन्दनाथ इति ।

(३) **सेतुबन्धे सुन्दरीमहोदयस्य** तत्प्रणेतुः शङ्करानन्दनाथस्य च उल्लेखानां कथा तु काप्यन्यैव । तत्र श्रीभास्कररायास्तत्पक्षान् क्वचित्संक्षेपतः, क्वचिच्च बहुविस्तरशः, क्वचित् कण्ठरवेण, क्वचित्तु अर्थतोऽनुवादरूपेण, क्वचित्खण्डनाय,

क्वचिन्मण्डनाय, क्वचिच्चान्यथैव वैकल्पिकत्वेनाभ्युपगमाय समुल्लिखन्ति । सन्तीदृशाः प्रसङ्गाः पञ्चदशास्मिन् ग्रन्थेऽस्मद्दृष्टिपथं गताः । समेषाममीषामत्र चर्चा न संभाव्यते कर्तुं, न वापेक्ष्यते प्रकृतेऽस्मिन् शिवसङ्कल्पप्रसङ्गे । अतश्चेत्थमुपवर्णितेषु त्रिप्रकारेषूल्लेखेषु प्रतिप्रकारमेकमिति त्रीण्येवोदाह्रियन्ते दिक्प्रदर्शनाय । तथा हि–

(क) तत्र खण्डनोदाहरणं यथा–पुरश्चरणजपसंख्याप्रश्नसमाधानं षोढा विकल्प्य प्रथमं संक्षेपेण **सौभाग्यरत्नाकर**पक्षं, तदनन्तरं "नव्यास्तु" इति नामोल्लेखं विनैव सविस्तरोपस्करं **सुन्दरीमहोदय**काराणां नवलक्षजपपक्षं चोपस्थाप्य "तच्चिन्त्य"मित्यादिसन्दर्भेण ससंरम्भमुभयमपि प्रतिक्षिप्य अन्ते उपसंहरन्तीत्थं श्रीभास्कररायाः–"अन्त्यो विधिर्लक्षत्रयस्येति स्वीकारस्तु शङ्करानन्दनाथादेर्महत्साहसमित्युक्तम् ।" इति (पृ. १८६) । जपसंख्याचर्चेयं **सुन्दरीमहोदये** स्थलद्वयेऽवतारितेति स्वयमवलोकयितुं शक्ष्यन्ति पाठका ग्रन्थेऽस्मिन् (१३९-४० पृष्ठे, १४८ पृष्ठे च) । तदिदं प्रसङ्गद्वयमप्यत्रस्थमवधार्य बहुधा खण्डितं भास्कररायैरिति परिभावयन्तु सूक्ष्मेक्षिकाकुशलाः ।

(ख) इदन्तावदुदाहरणं **सुन्दरीमहोदय**मण्डनस्य । **सेतुबन्धस्य** तृतीयविश्रामान्ते मातृकालेखनप्रकारविचारप्रसङ्गे केरलसंप्रदायानुसारिमातृकालेखनप्रकारमुल्लिख्य तद्विषयनिष्कर्षपरिज्ञानाय **सुन्दरीमहोदयं** स्वयं प्रमाणीकुर्वन्ति भास्कररायाः । एतेन च निगदव्याख्याता भवति प्रामाण्यबुद्धिः **सुन्दरीमहोदये** श्रीमद्भास्कररायाणाम् ।

(ग) इदमेकमुदाहरणं खण्डनमण्डनवर्जं विकल्पाभ्युपगमस्य, यत्र श्रीभास्कररायाः स्वमतविकल्पत्वेन श्रीशङ्करानन्दीयं पक्षमपि स्वीकार्यं मन्यन्त इति प्रतिभाति । तथा हि–"**श्रीचक्रस्यात्मनश्चैव मध्ये त्वर्घ्यं प्रतिष्ठयेत्** ॥" इति **नित्याषोडशिकार्णव**-मूलश्लोकव्याख्यायां पात्रसादनस्थाननिर्णये श्रीचक्रस्यात्मनश्च मध्ये विद्यमानस्य देशस्य समप्रविभागपक्षस्य स्वाभिमतेन तन्त्रान्तरलभ्यद्वादशद्वादशाङ्गुलपक्षेण सह स्वासनादरत्निमात्रदेशात् परतः श्रीचक्रस्थापनपक्षं श्रीशङ्करानन्दसमर्थितं चापि विकल्पत्वेनाभ्युपगच्छन्ति ।

तदयमत्र निष्कर्षः । अनुपदमुद्धृतैर्भास्कररायग्रन्थेषु तत्र तत्र व्याप्तैः **सुन्दरीमहोदयतत्कर्त्रुल्लेखैः** स्पष्टीभवति शङ्करानन्दस्य भास्कररायसमकालिकत्वोक्तिर्नैव क्षोदक्षमेति, अत एव शङ्करानन्दजीवनकालप्रश्नोऽयं पुनर्विचारमपेक्षत इति च । अस्माकं त्वित्थं प्रतिभाति । **सुन्दरीमहोदय**प्रणेतुः शङ्करानन्दस्य निधनादनन्तरं श्रीभास्कररायः कर्णाटकेभ्यः काशीं समागत्य स्वग्रन्थांस्तदा प्रणीतवान् स्याद् यदा **सुन्दरीमहोदयः** श्रीविद्यायाः प्रामाणिकपद्धतिग्रन्थरूपेण समार्जितप्रतिष्ठः समजनि काश्यास्तदानीन्तनतन्त्रशास्त्रविद्वत्समाजे । यदि नाम स्वग्रन्थलेखनकाले **सुन्दरीमहोदयस्य** तादृशी प्रामाण्यप्रतिष्ठा न समजनिष्यत काश्यां विद्वद्गोष्ठीषु कुतः खलु

श्रीभास्कररायस्तमज्ञास्यत्, कुतस्तरां वा निजपाण्डित्योत्कर्षाभिमानी तत्तादृशमहिमा पण्डितपुण्डरीकस्तमुदहरिष्यत्सबहुमानं खण्डनाय मण्डनाय वा स्वग्रन्थेषु साम्रेडम् । अनयोरुभयोर्मध्ये कियत् कालव्यवधानं सम्भाव्यत इति निर्णेतुं प्रमाणान्तराण्या-स्थेयानि । आशास्महेऽस्माभिरिहोत्थापितानि तथ्यान्यपि मनसिकृत्य पारोवर्यविदः समीक्षकाः प्रश्नमेवं पुनः परीक्ष्य निर्णेष्यन्ति ।

अन्ते च क्रमप्राप्तमाधमर्ण्यप्रकाशनं तान् सर्वान् प्रति येषां परिश्रमतपसा ग्रन्थोऽयमनेन रूपेणात्मानं लभते । तत्र प्रथमे मानार्हा ग्रन्थसम्पादका अस्मत्सुहृद्वराः श्रीविद्यादीक्षितास्तज्जपपराः साधकप्रवराः पण्डितवर्याः **डॉ. रुद्रदेवत्रिपाठिनो** येभ्यो धारयति विश्वविद्यालयः कार्तज्ञ्यं बहु । अनन्तरगणनीयाश्च भवन्ति नः प्रकाश-नाधिकारिपदभूषणाः कर्तव्यपरायणाः **डॉ. हरिश्चन्द्रमणित्रिपाठिनः**, रत्नामुद्रणालय-स्वामिनः **श्रीविपुलशङ्करपण्ड्यामहोदयाः** सर्वेऽन्ये तत्तत्सहायाश्च । य इमे सर्वेऽस्मत्साधुवादार्हणामर्हन्ति सर्वानेवैतान् वेदोक्ताशीर्मयीभिः सूनृतगीर्भिरभिनन्दन्, परमोपादेयस्यास्योत्कृष्टग्रन्थस्य प्रचयोपचयाय काशीश्वरं श्रीविश्वेश्वरं श्रीमज्जग-न्मातरमन्नपूर्णाम्बां च प्रार्थयमानश्च उपसंहरामि शिवसङ्कल्पवाचमेनामिति सर्व-मवदातम् ।

**वाराणस्याम्**
कार्तिकपूर्णिमायाम्,
वि. सं. २०५२

इति
**वि. वेङ्कटाचलः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# पुरोवचनिका
## [ सम्पादकीया ]

**महिमामयी 'श्रीविद्या'–**

अस्ति समस्तस्यापि ब्रह्माण्डमण्डलस्य सृष्टि-स्थिति-लयकर्त्री सकलाधिष्ठानभूता सर्वानन्दमयी राजराजेश्वरी कामेश्वरी-कामेश्वरयोः स्वारसिकसामरस्यप्राप्त-परमतत्त्वरूपा त्रिपुरसुन्दरी ललिताम्बिका भगवती कर्तुमकर्तुमन्यथाकर्तुं समर्था । पृथिव्यादि-षट्त्रिंशत्तत्त्वग्रामरूपिणी सतीयमेव सर्वातीता । अस्याः स्वरूपं जगद्व्यापीति तथापि जगतः पृथग् विद्यमानेयं विश्वोत्तीर्णा । पराशक्तिरियमेवेति– 'स्फुट-शिवशक्ति-समागमरूपिणी पराशक्ति'रित्युक्तं कामकलाविलासे । श्रीपरा-शक्तिः स्वसेवके वत्सला सती सगुणरूपं धारयति । निर्गुणब्रह्मस्वरूपिणी चिच्छक्तिरेव **'श्रीविद्या'** । अस्या एव तत्त्वत्रयेणानेकविधत्वम्, तत्त्वत्रयवशात् शक्तिरियं १- शाम्भवी, २- श्यामा, ३- विद्येति त्रैविध्यं प्राप्तवती । एतासु विद्यैव त्रिपुर- सुन्दरीति तत्त्वम् ।

पूर्वे श्यामा तथा चोत्तरे शाम्भवी संस्थिता । एताभ्यामेवानेकविद्याना-माविर्भावः । ता विद्याः श्रीविद्यांपरिवारभूता आम्नायानामाविर्भावोऽप्येताभ्यामेव । सर्वाम्नायेषु वर्णितानां देवतानां श्रीचक्रे स्थितिः । इदमेव श्रीसदनम् । अथैतासां परिवारदेवतानामनुपरिवारा असङ्ख्याकाः । स्वस्वाभीष्टप्राप्तिपूर्वकं गुरुमुखैक-समधिगम्यायाः श्रीविद्यायाः स्वीयजन्मजन्मान्तरीयपुण्यपुञ्जोदयेन सद्गुरोः सकाशात् कथञ्चित् कदाचित् समधिगम्य कश्चित् साधनसरणिं सुसम्पाद्य कृतकृत्यतां प्राप्नोति ।

श्रीविद्यासम्प्रदायस्यार्चनाविधाने **'श्रीचक्रस्य'** महती प्रतिष्ठा । तच्चक्रस्याधिष्ठात्री भगवती त्रिपुरसुन्दरी । सर्वा उपासना-प्रक्रियाः श्रीचक्रराजाधारेणैव सम्पद्यन्ते सम्पाद्यन्ते च । औपासनिककर्म्मणां विधानानि नैकशो ग्रन्थेषु प्रदर्शितानि । तन्त्रग्रन्थेषु सूचिता विषया इतरग्रन्थसाहाय्यं विना पूर्णतां न गच्छन्ति । मन्ये, अत्र गोपनीयतैव कारणं भवेत् ! परःसहस्रेभ्यः संवत्सरेभ्यः प्रवर्तमाना श्रीविद्या परां-प्रसृतिं सम्प्राप्य नानाविधैर्विधानैरुपास्यते । प्रत्येकं विधेर्वैज्ञानिकं रहस्यं विज्ञाय देशिकवराः स्वस्वाभिप्रेतं कर्तव्यजातं समावेश्य शिष्यहिताय संक्षिप्तीकरण- विस्तृतीकरण-नवावश्यकसंयोजन-समवबोधन-प्रभृतिभिः प्राचुर्येण विधिविशेषान् व्यस्तारयन् । अद्य भारतस्य नानाग्रन्थसङ्ग्रहालयेषु मातृकारूपेण विराजमानाः, विदेशस्थेषु पुस्तकागा-रेष्वपि यत्र तत्रोपलभ्यमानाः पद्धतिग्रन्था प्रकाशिता अप्रकाशिता विवेचिता

भाषान्तरैरन्विताः प्राप्यन्ते । वाराणसीस्थे सरस्वतीभवनपुस्तकालयेऽपि प्रायः षष्टि-सप्ततिमिताः पूजा-पद्धतयः श्रीविद्याया मया (सम्पादकेन) विलोकिता अनुशीलिताश्च । सर्वासु किमपि किमपि नावीन्यं विराजत्येव ।

श्रीविद्यायाः सम्प्रदायानामपि वैविध्यं विजृम्भते । आगमतन्त्रानुसारि वैविध्यमपि विद्यते । आचारा आम्नाया गुरुपारम्पर्याणि च सम्भूय बहुत्वं प्राप्तानि । अत एव श्रीगौडपादाचार्याः श्रीविद्यारत्नसूत्रे समसूत्रयन्–

१- भण्डासुरहननार्थमेकैवानेका ॥ १६ ॥

२- तया मन्त्रा अनेकाश्च तथा यन्त्र-तन्त्राणि ॥ १७ ॥

३- विविधभक्तिर्विविधोपासनम् ॥ १८ ॥

४- तस्मात् फलान्यनेकानि ॥ १९ ॥ इत्यादि ।

एका चिच्छक्तिरेवानेकाकाराऽनेकविधा शुद्धविद्यादि-परान्ता बभूवेति । अत एव मन्त्र-यन्त्र-तन्त्र-विधानादयोऽपि विविधा अभूवन् । श्रीयन्त्रराजार्चने याऽऽवरणार्चा पात्रासादनपूर्वकं न्यासादिसंयुता विधीयते साऽपि वाम-दक्षिणाचार-श्रीकुल-कालीकुल-समयाचारादिभेदैर्नानात्वं भजते । पूर्णाभिषेक-पूर्णक्रमाभिषेकादिक्रमेण प्राप्तदीक्षाः साधका गुरुपारम्पर्यं ग्रन्थपारम्पर्यं चावलम्बमाना उपासते भगवतीं यथा तथा । रुचीनां वैचित्र्याद् ऋजु-कुटिल-नानापथजुषः साधकाः परिनिष्ठिततया स्वे स्वे वर्त्मनि वर्तमाना उपदिशन्ति दीक्षयन्ति च सिसाधयिषून् ।

महामहिमशालिन्याः श्रीविद्याया उपास्ति-विषये 'श्रीशङ्करानन्दनाथ'-विरचितोऽयं 'सुन्दरीमहोदय'नामा ग्रन्थः पूर्वमप्रकाशितः सुसम्पादनपूर्वकं प्रकाश्यत इति महान् प्रमोदावसरप्रसरः । ग्रन्थकर्तुः परिचयः, ग्रन्थवैशिष्ट्यं भाषायां विषयसंक्षेपश्चाग्रे निवेद्यते ।

**ग्रन्थकृत्-परिचयः सुन्दरीमहोदयस्य वैशिष्ट्यञ्च–**

भारतीय-परम्परा-पालकाः कवयो विपश्चितो ग्रन्थकारा उपासकाश्च प्राय आत्मनो निर्मितीः प्रति कर्तव्यपूर्तिमेव मन्वानाः स्वीय-परिचयाद्युट्टङ्कन औदासीन्य-मेव धारयन्तोऽवर्तन्त । प्रस्तुतस्य 'सुन्दरीमहोदया'-भिधग्रन्थस्य निर्माता विषयेऽस्मिन् मनाग् जागरूक इव ग्रन्थारम्भे, प्रत्युल्लासं समाप्तिपुष्पिकासु ग्रन्थान्ते च ससङ्कोचं किमपि किमप्युल्लिख्यास्मानात्मनो विषये परिचाययतीति नः सौभाग्यम् । प्रथमोल्लासे 'श्रीगुरु-प्रणति'माध्यमेनायं कथयति–

> यो वै दीक्षा-सेकमात्रेण दिव्यं ज्ञानं दत्त्वा मोहपाशं निकृत्य ।
> दीनं सद्यो मामरक्षीद् भवाब्धेस्तं श्रीरामानन्दनाथं नमामि ॥ २ ॥

अत्र पद्ये ग्रन्थकृत् स्वगुरोर्नाम 'श्रीरामानन्दनाथ' इति समसूचयत् । एवमेव तन्त्रमार्गोपदेशकत्वेन 'विमर्शनाथा'भिधं गुरुमपि प्रणमति–

यदीयवाचाऽमृतमादृताः सकृज्जडा निपीयाशु भजन्ति जीवताम् ।
तं तन्त्रमार्गाध्ययने गुरुं नतो 'विमर्शनाथं' भगवन्तमीश्वरम् ॥ ३ ॥

श्रीरामानन्दनाथगुरवो ग्रन्थकारस्य परमसम्मान्या आसन्निति प्रत्युल्लासान्ते सूचितया गद्यात्मिकया पुष्पिकया ज्ञायते । यथा–

'श्रीमत्परमहंस-परिव्राजकाचार्य-श्रीरामानन्दनाथ सरस्वती-पूज्यपाद-शिष्ये'त्यादि । किञ्च, ग्रन्थान्ते लिखितपद्यमपि–

रामानन्द-गुरुप्रसाद-गलिताज्ञानश्चकार स्फुटं
पूजापद्धतिसङ्गतार्थ-विषय-ज्ञानार्णवोक्तेरहम् ।
व्याख्यानं तु यथामति प्रभजतां श्रीसुन्दरीपादुकां
तोषं तज्जनयेदपार्थकमपि प्रेमार्द्रभक्त्या पराम् ॥ ५।२ ॥

एतेन स्पष्टमेव गुरुभक्तेर्गाम्भीर्यं ग्रन्थकर्तुर्हृदये व्यराजत्, तथा तेषामेवाज्ञया ग्रन्थस्यास्य निर्म्माणमभूदित्यपि श्रीशङ्करानन्दनाथः 'कृतं ग्रन्थं गुरुप्रीत्यै भजन्तु सदुपासकाः' इति विलिख्य स्वीकरोति ।

अस्य 'सुन्दरी-महोदय'स्य प्रणयनं वाराणस्यामभूत् । विधौ नूनं विकल्पबाहुल्येन प्रसृता । साधनायां विधेरपि प्राधान्यं भवत्येव । "यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः" इत्यादि गीतोक्तवचनेन विध्यनुसृत्यैव सिद्धिं विन्दति मानवः । अतिप्रसृत्या ब्रह्मविद्याया उपासनाविधिर्विद्वत्साध्यः । श्रीशिवप्रोक्तागमेषु ये ये निर्देशा विद्यन्ते, तेषां साकल्येन पालनं नास्ति सम्भवमिति कृत्वैव पूर्वाचार्यैर्लोकानां हितकाम्यया पृथक्-पृथग् ग्रन्था निर्मिताः । सत्यां च संशीत्यां तदीयसमाहितये शास्त्रज्ञैः सप्रमाणं तदर्थं व्याख्यानानि विहितानि ।

'ज्ञानार्णव'तन्त्रानुसारं दीक्षां सम्प्राप्य तद्विषये या स्पष्टताऽपेक्षिताऽऽसीत्, तामत्र त्रिपुरसुन्दरीमहोदयापरनामके 'सुन्दरीमहोदयाभिधे ग्रन्थरत्ने श्रीमान् देशिकवरः श्रीशङ्करानन्दनाथ आविरकरोत् । उल्लास-पञ्चकाञ्चिते ग्रन्थेऽस्मिन् प्रथमतो मन्त्रराजमधिकृत्य भुवनेश्वरीबीजादारभ्य नानाविधोपासकोपासितानामुद्धारान् प्राकाशयत् । यत्र तत्र ग्रन्थेषु बीजमन्त्राणां विभ्रमो मा भूदिति धिया तत्तदुद्धार-पद्यानि स्पष्टं व्याख्यायात्र दर्शितवान् । गुरुपरम्पराप्राप्तानि रहस्यानि यथा-यथमत्रोपस्थापितानि सन्ति । ज्जाग्रदाद्यवस्थाचतुष्टयवत्याः षोडशीविद्यायाश्चातु-र्विध्यं त्रिकूटा-पञ्चकूटा-षट्कूटाऽष्टकूटादीनां विचारश्चाप्यत्रानाविर्भूतपूर्व एव ।

अस्मिन्नेवोल्लासे दीक्षाविधिं विभावयता ग्रन्थकृता स्पष्टः क्रमोऽवबोधितः । मन्त्रोपदेशप्रकारे बाला-पञ्चदशी-षोडशीनां यः क्रमः साम्प्रतिकैराद्रियते, तस्मिन् बालानन्तरं गुरुपादुका-पञ्चसिंहासनविद्या आम्नायविद्याश्चोपदिश्य पञ्चदशी-मन्त्रोपदेशो निर्दिष्टः । षोडश्या वाचनिकत्वं नास्तीति सप्रमाणं प्रकाश्य पारिभाषिक-

षोडश्या उपदेशप्रकारो वर्णितः । अस्यां दीक्षायां त्रैवर्णिकस्यैवाधिकार इति स्पष्टमुद्घोषितं ग्रन्थकारेण ।

द्वितीयोल्लासे स्वगुरोरभिमतानुसारमुपोद्घातरूपेण बालाविद्यायाः प्रथममनुष्ठानावश्यकतां प्रतिपादयति । उपासकस्य दीक्षानन्तरं कर्तव्यानि कर्म्माणि प्रकाशयितुं सुन्दरीविद्यायाः षोडश्याश्च गौणमुख्यभेदा अपि स्पष्टीकृताः । सिंहासनदेवीनां पूजा प्रायः साम्प्रतिकैर्न क्रियते । पीठपूजायाः स्पष्टीकारे वस्तुतो वामा-ज्येष्ठारूपशक्त्यष्टकस्यैव पूजा पीठपूजा विद्यत इति सूचितम् । अत्र पञ्चसिंहासनगतानां विद्यानां परमगाम्भीर्यं सम्प्रदायैकवेद्यत्वमस्तीति संसूच्य महत्त्वं प्रतिपादितम् ।

नित्यकृत्यविधानमुद्घाटयता ग्रन्थकारेण प्रातः शय्यात उत्थानानन्तरं कर्त्तव्यानि कर्म्माणि सविधि सूचितानि । विधौ बहुत्र नावीन्यं वैशद्यं च प्रतिभाति । 'नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते' इति प्रतिज्ञातमिवानुपालयन् ग्रन्थकारः सर्वत्र मान्यानां ग्रन्थानां प्रमाणान्युपस्थाप्य विवेचयति । अर्चने प्रयुज्यमानानि मन्त्रवाक्यानि सुबोध्यानि सारगर्भाणि प्रस्तुतानि । मीमांसकशिरोमणित्वेन पदे पदे शङ्का उत्पाद्य तासां समुद्धाराय प्रमाणानि तर्कांश्च निःशङ्कमङ्कयत्यत्र ग्रन्थकारमहाशयः । अनेकत्र न्यायानामाधारेण पूर्वापरप्रसङ्गसङ्गतिमपि साधु समुपस्थापयति, किञ्च विनम्रया वाण्या तत्र विश्वासाय प्रेरयति विदुषः ।

श्रीचक्रराजस्यालेखनप्रकारा अत्र विविधा आविष्कृताः । पूजारम्भे पात्रासादनक्रमे विशेषार्घादिषु सामान्यार्घपात्रं देवीवामभागे स्थापनीयमिति निर्दिष्टम् । न्यासविधानेऽपि बहवो न्यासा नूत्नत्वेन दर्शिताः । महाषोढा-विधानमत्र न प्रस्तुतम् । अत्र तृतीयोल्लासः पूर्णतां प्रापितः ।

चतुर्थोल्लासो महापूजां नवावरणपूजां चाधिकृत्य विरचितः । प्रथममत्रावरणाङ्गपूजोत्तरमायुधपूजा समादिष्टा, सा चान्यासु पद्धतिषु तथा नैव । वृत्तत्रयार्चनं नास्ति । आवरणानां विषये किमपि विशिष्य न सूचितम् । अन्यत्र बृहद्वडवानलतन्त्रे, त्रिपुरार्णवे, त्रिपुरार्चनमञ्जर्यां द्वासप्तत्यावरणार्चाऽपि दर्शिताऽस्ति । पूजाविधौ ग्रन्थकारस्य स्थितिकालः किल श्रीभास्कररायमखिनः काल आसीदिति विदुषां विचारः । यतो हि श्रीविद्यायाः परमाचार्याः श्रीभास्कररायाः सुन्दरीमहोदयस्य स्वीये विवेचने क्वचिद् वैचारिकं खण्डनमपि प्रास्तुवन् । ग्रन्थकारस्य मीमांसाविद्यागुरवः परममीमांसकाः श्रीखण्डदेवा अवर्तन्त । 'मीमांसाविषयकाः केचन ग्रन्था अपि श्रीमता शङ्करानन्दनाथेन विरचिताः' इति स्वीये 'तान्त्रिक-संस्कृति'नामके निबन्धे महामहोपाध्यायश्रीगोपीनाथकविराजा असूचयन् । तैरेवैतेषां ग्रन्थप्रणेतॄणां समयो यीशोः १७०७ संवत्सरासन्नः सूचितः ।

'सुन्दरीमहोदय'स्य प्रणेतृवरः काश्यामेव विद्याध्ययनं विधाय नानाशास्त्रेषु समवाप्त-प्रावीण्यस्तदानीन्तनेषु काशिकविद्वत्सु सम्मानभागविद्यतेत्यपि 'कविमण्डने'-त्यादिसम्मानितोपाधिनाऽनुमातुं शक्यते । 'श्रीशम्भु-भट्ट' इत्यासीदस्य महाभागस्य सुप्रसिद्धमभिधानं दीक्षानाम च 'श्रीशङ्करानन्दनाथ' इति चावर्तत ।

**सुन्दरीमहोदयस्य वैशिष्ट्यम्—**

श्रीविद्याया उपासना वेद-वेदाङ्ग-स्मृति-पुराण-स्तोत्रादिषु बहुधा वर्णिता विद्यते । आगमेषु तु महता विस्तारेणास्याः प्रतिपादनम्, विधि-निदर्शनादिकं च साङ्गोपाङ्गं समाकलितमस्त्येव । यामलेषु तन्त्रग्रन्थेषु च क्वचित् सामस्त्येन क्वचन चाङ्गाङ्गिभावेन श्रीविद्यायाः प्राशस्त्यं विधानादिकं च विशिष्य निर्दिष्टमपि विलोक्यत एव । ब्रह्मविद्याया अस्याः साहित्यमियद् विस्तृतं लभ्यते यद् इदमित्थन्तया निगदितुं न कोऽपि पारयेत् । ततोऽप्यधिकमुपासनाशास्त्राणां व्याख्यानानि विवेचनानि पद्धति-प्रदर्शकानि निबन्धादीनि पुस्तक-परम्परारूढानि परां विशालां कोटिमाटीकन्त इति किमु वक्तव्यम् ? यत्र बहूनि शास्त्राणि, यत्र बहवः सम्प्रदायाः, यत्र च भूयांस आराधकाः स्युस्तत्र वैविध्यं नागच्छेदिति विषये को नु न मन्येत ? सेयं स्थितिरत्र साधनापूर्वेषामाचार्याणां पद्धतिषु प्रोक्तान् क्रमान् यत्र ग्रन्थकारो न स्वीकरोति, तत्र तत्खण्डने न बिभेति । स्वमतं सम्प्रदायाभिमतं प्रमाणानि चोपस्थाप्य साधयति स्ववचनानि । पूजोत्तरं दीपभक्षणमपि सूचयति, तथापि समग्रेऽपि ग्रन्थे वामाचार-प्रख्यापनं न करोति ।

पञ्चमोल्लासे मन्त्रपुरश्चरणं विना पूजाधिकारो नास्तीति विविच्य पुरश्चरण-विधिं निपुणं निर्दिशति । काम्यान् प्रयोगानपि प्रान्ते निवेशयति ।

इत्थमयं ग्रन्थः प्रामाणिकतयोपन्यस्तः श्रीविद्यासाधकेभ्यः परमोपकारकारीति कथने नास्ति कश्चन सन्देहलेशः ।

**सम्पादकीयं निवेदनम्—**

यीशोः १९९१ तमे वत्सरे श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपति-महाभागानां मान्यानां **प्रो.** विद्यानिवासमिश्रमहाभागानामनुकम्पया वाराणस्यां योगतन्त्रागमविभागे विशिष्टानुसन्धानसहकर्तृत्वेन नियोजनमभूत् । तत्र मया ग्रन्थसम्पादनेच्छया 'सुन्दरीमहोदय'स्य सम्पादनं स्वीकृतम् । मूल-मातृकायाश्चित्र-मातृका-(फोटोकॉपी)प्राप्त्यनन्तरं पुनस्ततो निवृत्त्याहमुज्जयिनीं प्राप्य सम्पादित-प्रतिलिपिं मुद्रणाय प्राहिणवम् । विश्वविद्यालयस्य प्रकाशनाधिकारि— डॉ. श्रीहरिश्चन्द्रमणित्रिपाठिनां प्रेरणया प्रयासेन च ग्रन्थोऽयं प्रकाशनसौभाग्यं प्राप्तः ।

अत्र सम्पादने मान्याः कविराजवर्याः श्रीविद्याभास्करास्तन्त्रागमनदीष्णाः श्रीसीतारामशास्त्रिमहाभागा मम सम्प्रेरका आसन्निति स्मारं स्मारं तान् प्रणौमि। एवमेव सरस्वतीभवनग्रन्थागारस्याध्यक्षाः डॉ. विजयनारायणमिश्रमहाभागा अपि भवनस्था मातृका अवलोकनावतरणादिपूर्वकं सहयोगिनोऽभवन्निति तान् धन्यवादशतैरभिनन्दयामि। प्रकाशनाधिकारिणो डॉ. हरिश्चन्द्रमणित्रिपाठिनां सौमनस्यं प्रकाशनविधौ प्रशंसनीयमस्तीति ते साधुवादसहस्रैरभ्यर्च्या एवेति सर्वेषामुपकारान् स्वीकृत्य त्रुटिभ्यश्च क्षमां प्रार्थयन् विरूपाक्षवक्षोविहारिण्यै ग्रन्थमिममर्पये।

उज्जयिनी —डॉ. रुद्रदेवत्रिपाठी



# 'सुन्दरीमहोदय' का प्रतिपाद्य : विषय-संक्षेप

यह ग्रन्थ पाँच उल्लासों में विभक्त है। ग्रन्थ का आधार 'ज्ञानार्णव' है तथा स्वयं ग्रन्थकार ने इस ग्रन्थ की रचना के हेतु का चौथे पद्य में उल्लेख किया है कि–

जो साधक ज्ञानार्णवतन्त्र के अनुसार न्यासादि-विस्तार के सम्पादन में असमर्थ हैं, उनके लिये मैं स्पष्टतापूर्वक आवश्यक कर्म-पद्धति का कथन करता हूँ। इसमें शम्भुदीक्षाविधि, श्रीत्रिपुरार्चन की नित्य, नैमित्तिक तथा काम्यकर्मविधि का कथन हुआ है।

प्रारम्भ में ग्रन्थकार ने ज्ञानार्णव के 'शृणु देवि ! प्रवक्ष्यामि' इत्यादि ११-७ से ४ पद्य देकर कामेश्वरी, भुवनेशानी, कामेशी के बीजों से समस्त विद्याओं का विकास होने के कारण उक्त पद्यों की व्याख्या की है तथा उनसे पञ्चदशी के कूटों का विभावन किया है। यहीं प्रसंगवश त्रिपुरा के तीन भेद तथा कामराज, लोपामुद्रा, अगस्त्य, मनु, चन्द्र आदि से उपासित विद्याओं का उद्धार सप्रमाण उद्धृत किया है। बीच-बीच में अपनी ओर से तर्क करते हुए समाधान देने के लिये 'तन्त्रसार', 'दक्षिणामूर्तिसंहिता' आदि के प्रमाण भी दिये हैं।

षोडशी-विद्या के चार भेदों का विवेचन करते हुए यहाँ ३,५,६ और ९ कूटों के द्वारा निष्पन्न षोडशी के लिये शक्ति, शाङ्करी और वैष्णवी षोडशी के रूप में निर्दिष्ट संहिता-वचनों का खण्डन करके स्वमत का उल्लेख करते हुए ज्ञानार्णव के अनुसार पञ्चदशी के ही चार भेद माने हैं। पञ्चदशी के बारह भेदों की चर्चा के साथ महाषोडशी को तुर्यावस्थारूप बतलाया है तथा अन्य भेदों को जाग्रत्, स्वप्न और सुषुप्त्यवस्थारूप विद्या कहा है। ज्ञानार्णव में षट्कूटा तथा वैष्णवी सप्तकूटा का प्रतिपादक ग्रन्थांश त्रुटित होने का भी यहाँ कथन है। यहाँ 'तन्त्रसार' एवं 'सौभाग्यरत्नाकर' के द्वारा उपर्युक्त त्रुटितांश की व्याख्या न करने का जो कारण दिया है, वह निर्युक्तिक है, ऐसा कहकर उसका खण्डन किया है। षट्कूटा महाषोडशी का उद्धार ज्ञानार्णवोक्त पद्यों की व्याख्या के द्वारा स्पष्ट करके लेखक दीक्षा के बारे में स्वसम्प्रदाय-दीक्षा एवं सर्वतन्त्रीयाङ्गानुष्ठानदीक्षा का विवरण देकर अविरोधी तन्त्रान्तर-सिद्ध को ग्रहण करने की सहमति देता है।

इसके पश्चात् 'दीक्षाविधि' का वर्णन है। इसमें दीक्षामुहूर्त्त, शिष्यकृत्य, सङ्कल्प, मण्डप-प्रवेश, पुण्याहवाचन, वेदीनिर्माण, यन्त्रपूजा, कुम्भस्थापन, गुरु-शिष्य-कर्तव्य विधि, शिष्याभिषेक, षट्चक्रभेद-बोधनप्रकार, ब्रह्मरन्ध्रबोध एवं कुण्डलिनी-बोध

आदि वर्णित हैं। मन्त्रोपदेश-प्रकार में गुरुपादुका, बाला, पञ्चसिंहासनविद्या, आम्नायविद्या, त्रिकूटा, पञ्चदशी एवं षोडशी उपदेश का क्रम बतलाया है। षोडशी-मन्त्र की महिमा और उसका जिस किसी को उपदेश देने का निषेध करते हुए यह विशेष बलपूर्वक कहा गया है कि वाचिक उपदेश तो कदापि नहीं करना चाहिये। यहाँ प्रश्नोपस्थापनपूर्वक यह भी समाधान दिया गया है कि यदि अत्यावश्यक हो, तो भूमि पर लिखकर बता दे, और इससे भी तुष्टि न हो तो एक बार कान में मन्त्रोच्चार कर दे।

इस प्रकार षोडशी के उपदेश के पश्चात् चक्रपूजोपयोगी अन्य विद्याओं के उपदेश का निर्देश है। तदनन्तर नामकरण 'आनन्दनाथान्त' करने की सूचना है। वहीं शिष्य मूलविद्या का अष्टोत्तरशत जप साङ्ग करे और गुरु के चरणों में प्रणतिपूर्वक 'कृतार्थता' का ज्ञापन करे। गुरुदेव शिष्य के मस्तक को सूँघकर अपने पारम्पर्य और समयाचार का अधिकारानुसार ज्ञान करायें। तत्पश्चात् गुरु, कुमारी, सुवासिनी और सामयिकों की पूजा, भोजनादि-पूर्वक दीक्षाविधि की पूर्णता करे।

यहीं ग्रन्थकार ने मूलग्रन्थ—ज्ञानार्णव के द्वारा बाला के उपदेश से पूर्व गुरुपादुका के उपदेश का उल्लेख न करने के प्रश्न को उठाकर उसका समाधान परशुरामकल्पसूत्र के वचन से किया है, तथा गुरुपादुकामन्त्रोद्धार के पद्य प्रस्तूत करके व्याख्या की है। मन्त्र में प्रयुक्त कूटाक्षर में यहाँ 'वरयूं' के स्थान पर 'वयरूं' का उद्धार है, जो प्रचलित क्रम से नवीन है, अतः यह विचारणीय भी है।

नवकलश स्थापना के अभाव में महाशङ्ख-स्थापना का भी यहाँ निर्देश हुआ है। कुलार्णव-तन्त्र के अनुसार शिष्य के पालनीय नियमों को प्रस्तुत करके ग्रन्थकार ने विशेष रूप से यह कहा है कि—इस दीक्षा में त्रैवर्णिकों का ही अधिकार है; किन्तु शक्तियों के लिये कोई प्रतिबन्ध नहीं बतलाया है। यहाँ "दीक्षाविधि" नामक प्रथम उल्लास पूर्ण होता है।

**द्वितीय उल्लास—**

इस उल्लास में ग्रन्थकार अपने दीक्षागुरु के द्वारा बतलाये गये सारार्थ को 'उपोद्घात' के रूप में बतलाते हैं। सर्वप्रथम बाला, भैरवी और सुन्दरीरूप भगवती के तीन लीलाविग्रहों के कारण देवता-प्रकाशक विद्या के तीन भेदों का सूचन करके तीनों की अवस्था का निरूपण किया है। उपासना-शब्द की परिभाषा बतलाकर 'प्रातरुत्थान से आसन-विसर्जन' तक वैदिक और तान्त्रिक कर्म्मों का उपदेश करने की प्रतिज्ञा, पूजा में कर्तव्य कर्म्मों में प्रयुक्त प्रमुख शब्दों की व्याख्या, उनकी आवश्यकता, फल, अपेक्षित अङ्गभूत कर्भ का विवेचन करते हुए ग्रन्थकार ने बाला और तदुत्तर सुन्दरी आदि देवता के न्यासादि-साम्य का दिग्दर्शन कराया है।

पूजा के आरम्भ में पीठ का परिचय देते हुए यहाँ पञ्चसिंहासन और उनके चार पादों में ब्रह्मा, विष्णु, रुद्र और ईश्वर की स्थिति, उनकी दिशा का तथा ब्रह्माण्डपुराण के अनुसार चारों मञ्चों के आकार, वर्ण आदि का सप्रमाण वर्णन किया है। इसी को सिंहासन कहा है। इसी में त्रिपुरा बाला-विग्रहा तथा त्रिपुरभैरवीविग्रहा बनकर मध्य में चित्कला के रूप में चिन्तनीय है, ऐसा व्यक्त किया है। इन पञ्चसिंहासन-देवियों की पूजा के पश्चात् बाला की पूजा करने का निर्देश है। यहाँ 'त्रिपुराभैरवी-सम्पत्प्रदा'नामिका के ही उपर्युक्त चार अवतार हैं, यह व्यक्त करके सदाशिव-प्रेत तथा ब्रह्मानन्दमयी शिवा का मध्य में आवास और त्रिपुराभैरवी विद्या का मन्त्रोद्धार भी दिया है। यहीं चैतन्यभैरवी विद्या का मन्त्रोद्धार देते हुए इन दो रूपों का विवेचन किया है। ब्रह्मादि चारों पादों के देवों में सृष्टि-स्थिति-संहार आदि कार्यों की सम्पादन-क्षमता नहीं होने से इन देवों ने त्रिपुराभैरवी की उपासना की और वे प्रसन्न होकर ही विष्णुभैरवी, रुद्रभैरवी आदि का विग्रह धारण कर उनकी उपास्या बनीं तथा सभी देवों को सृष्ट्यादि- सम्पादन की क्षमता प्रदान कीं।

मध्य में सदाशिवमहाप्रेतपद्मासनरूप सिंहासन में अघोरभैरवी तथा भुवनेश्वरी की पूजा और मन्त्रोद्धार को प्रकट किया है। 'चारों दिशाओं के पादों में वामा, ज्येष्ठारूप शक्त्यष्टकात्मक पूजा ही पीठपूजा है' यह भी यहाँ ग्रन्थकार ने व्यक्त किया है। ये पञ्चसिंहासनगत विद्याएँ अतिगम्भीर सम्प्रदायवेद्य हैं–इसलिये इन्हें 'उपोद्‌घात' में कहा गया है। तथा शेष आम्नाय-विद्याएँ, उनकी पूजा के समय बताने का सूचन करके द्वितीय 'उपोद्‌घात' नामक उल्लास को पूर्ण किया है।

**तृतीय उल्लास–**

उपर्युक्त दीक्षा से दीक्षित साधक के लिये 'नित्य-कृत्य-विधान' का कथन करते हुए 'सुन्दरीमहोदय' के कर्ता श्रीशङ्करानन्दनाथ ने पूरा क्रम इस प्रकार बतलाया है–

प्रातः शय्या से उठकर ब्रह्मरन्ध्र में पादुकामन्त्र द्वारा गुरुत्रय-नमन और परदेवता-प्रणाम करके उनकी प्रभा से निर्मल होकर नदी अथवा घर में सङ्कल्पपूर्वक स्नान करे। तदनन्तर आचमन करके देव, ऋषि और पितरों का तीन-तीन बार तर्पण एक-एक कूट से करे। समग्र मूलमन्त्र से महात्रिपुरसुन्दरी का तर्पण करके अङ्गप्रोञ्छन, सूर्यार्घ्यदान, कामेश्वरी-गायत्री का यथाशक्ति जप पूर्ण कर यागमण्डप में आये। द्वारश्री, देहली पर वास्तुपुरुष की पूजा और आसनपूजा करके वहाँ बैठे। इन विधियों के सूचन में 'रुद्रयामल' तथा 'विशुद्धेश्वर' तन्त्र का साहाय्य भी लिया है।

सन्ध्या में त्रिपुण्ड्रधारण एवं सूर्यमन्त्र, आसनमन्त्र बताकर मन्त्रोद्धार, नवचक्रेश्वरीविद्योद्धार तथा चक्रराज-लेखन-प्रकार व्यक्त किया है। यह लेखन-प्रकार ब्रह्मसूत्र से मान निर्धारित कर दिक्क्रम से रेखाविधानपूर्वक समझाया है। ४३ त्रिकोण, वृत्त, भूपुरादि से युक्त कादिमतोक्त श्रीयन्त्र का यह विधान मूलोक्त प्रकार से सम्मत बतलाया है। छः वृत्त यहाँ मान्य हैं। सौभाग्यरत्नाकर तथा तन्त्रसार की मनोरमा टीका का भी यहाँ स्मरण है। अक्षरलेखन को यहाँ शास्त्रीय नहीं माना है। वृत्तव्यवस्था पर ग्रन्थकार ने विस्तार से विचार किया है। भूपुर की द्वारनिरपेक्षता ग्रन्थकार को मान्य है। केसररहित श्रीयन्त्र के चार प्रकार तथा केसरसहित पञ्चम भेद, सौभाग्यरत्नाकरोक्त छठा भेद, द्रविड-सम्प्रदायसिद्ध अक्षरसहित सप्तम भेद आदि की विस्तृत चर्चा के पश्चात् प्रस्तारद्वय, लेखनी एवं लेखनद्रव्य पर विचार दिया है।

तदनन्तर चक्रों के त्रैलोक्यमोहनादि नाम, पूरे चक्र के सृष्टि, स्थिति, संहारात्मक भेद प्रदर्शित करके चक्रराजसंस्कार, प्राणप्रतिष्ठाविधि, श्रीचक्रनाश-प्रायश्चित्त, पादोदकमाहात्म्य, दर्शनफल, ताम्रादि यन्त्रों की पूज्यता-कालावधि, यन्त्रस्थापन, पात्रस्थापन, कलादि-अर्चन, सामान्यार्घ (देवी के वामभाग में), विशेषार्घ, कूटत्रयकरणक पूजा-विचार, पात्रस्थापनस्थान, आधारस्वरूप आदि ऊहापोहपूर्वक प्रस्तुत किये हैं। इसी प्रसंग में परिवार-तर्पण कलश-जल से और प्रधान देवी-तर्पण केवल विशेषार्घ से करने का निर्देश भी सप्रमाण दिया है।

इसके पश्चात् आत्मपूजा, भूतशुद्धि, आत्मप्राणप्रतिष्ठा, न्यासविधि, मन्त्र के ऋष्यादि, पञ्चबाणन्यास, करषडङ्गन्यास, हृदयादि और मातृकान्यास (अन्तः तथा बहिः), सर्वाङ्गन्यास, षोडशस्वरन्यास, विद्यान्यास (सृष्टि, स्थिति, संहारात्मक) त्रिविध, नवयोनिन्यास, हृदयादि योजनाप्रकार, वैकृतन्यास–करशुद्धिन्यास, आसन-पूजा, चतुरासनन्यास, पञ्चदशीन्यास, षोडशीन्यास–सौभाग्यवर्धन, सम्मोहन, श्रीविद्यार्णसंहारन्यास, वशिन्यादिन्यास, लघुषोडान्यास (गणेशादि-पीठान्त), कामरतिन्यास, नवयोनिन्यास, (बहिरन्तः) वर्णित हैं। यहीं षोडशनित्यान्यास, चक्रन्यास, श्रीविद्यान्यासपूर्वक स्वतन्त्र गुरुन्यास (ओघत्रयन्यास), श्रीविद्या के सृष्टि-स्थित्यादिन्यासत्रय, ये ही ज्ञानार्णवोक्त न्यास हैं। अधिक न्यासाभिलाषी संहितोक्त पंचविध न्यास का वर्णन करके 'न्यास-विधि-खण्ड' नामक 'तृतीय उल्लास' पूर्ण हुआ है।

**चतुर्थ उल्लास—**

इस उल्लास में महापूजा की विधि वर्णित है, जिसमें अन्तर्याग, आचमन, प्राणायाम, नव मुद्राप्रदर्शन, मुद्राओं के बीजों का उद्धार, पीठपूजन (विस्तृत-वर्णनयुक्त), पीठ-पादस्थ देवी-पूजन, आवाहन, देवीध्यान, मूर्त्तिविरचन, आयुधध्यान, आवाहनादि षण्मुद्राप्रदर्शन, षडङ्गन्यास, सकलीकरण, आरात्रिक, परमीकरण, अमृतीकरण, नवमुद्रादर्शन, मानसपूजन का प्रारम्भिक विधान, पूजन-तर्पण-प्रकार-निर्धारण, परिवारार्चनानुज्ञा, तिथिनित्या एवं षोडशनित्या पुनः तिथिनित्यापूजन, नित्यामन्त्रोद्धार, गुरुमण्डलपूजा, आम्नायपूजा, आम्नायमन्त्रोद्धार, पञ्चसिंहासनपूजा, पञ्चपञ्चिकापूजा एवं मन्त्रोद्धार, दर्शनपूजा, तदनन्तर छत्र-चामरादि समर्पित करके नवावरण-पूजा का निर्देश है।

इसमें— १. आवरणाङ्गपूजा, आयुधाष्टक, पूजास्थाननिर्देशपूर्वक चक्र-क्रमानुसार, २. भूपुरपूजा, ३. षोडशार, ४. अष्टदल, ५. चतुर्दशार, ६. दशार, ७. द्वितीय दशार, ८. अष्टार और ९. त्रिकोण के बाहर आयुधपूजा द्वारा नौ आवरणपूजा कही गई है। तदनन्तर सर्वानन्दमय चक्र में महात्रिपुरसुन्दरी तथा षोडशार्णमन्त्रमयी श्रीविद्या की अर्चना का सूचन है। नवमुद्रादर्शन तथा प्रधान-पूजा सर्वोपचारमयी करके धूप, दीप, आरात्रिक आदि का वर्णन किया है। इन सब वर्णनों में ग्रन्थकार ने विविध ग्रन्थों के उद्धरण देते हुए तर्क-वितर्कपूर्वक स्वकथन को प्रमाणित भी किया है। काम्यारात्रिक का विवेचन भी यहाँ उक्त है। नैवेद्य, नित्यहोमविधि का संकेत, ताम्बूलार्पण, बलिदान-विधि, बलिमन्त्रोद्धार-कथन के पश्चात् "अग्रिम कृत्य को अनावश्यक बताकर पात्रस्थ द्रव्य की प्रतिपत्तिपूर्वक कलश से चक्र की पूजा करके आवरण-पूजा समाप्त करे" यह कहा गया है।

पुनः हस्तपादादि प्रक्षालित कर मूलमन्त्र-जप अथवा सहस्रनामाद्यर्चन करे तथा बाला-कुमारी तथा सुवासिनी-पूजा करके तीन बार पूजन-तर्पणपूर्वक पूजा समर्पित करे। खेचरीमुद्रा द्वारा परमेश्वरी को हृदय में विराजमान करे और ईशानकोण में शेषिकादेवी को निर्माल्य अर्पित करके गुरुपात्र से गुरुत्रय-यजन-तर्पण एवं दीप-भक्षण करे। अर्घ्यपात्र के अमृत से तीन कूटों द्वारा अमृतपान से अन्तःकरण में विराजमान भगवती का तर्पण करे। तत्पश्चात् पात्र-प्रक्षालनादि करके उन्हें अधोमुख रखे। बलिदान-निर्माल्यादि नदी में प्रक्षिप्त करके यथासुख विचरण करे।

ग्रन्थकार इसके आगे कुमारी तथा सुवासिनी की आयु का प्रमाण, उपचार-निर्णय, अशक्तावस्था में करणीय कर्म आदि का निर्देश देकर सहस्रनामकीर्तन का सुझाव देते हैं और चौथे 'नित्यपूजाविधि' नामक उल्लास को पूर्ण करते हैं।

**पञ्चम उल्लास–**

पुरश्चरण-विधि-दर्शक पाँचवें उल्लास में ग्रन्थकार ने क्रमशः–मालाविधि, संस्कार-विधि, जपप्रकार, नैमित्तिक-पातक-नाशार्थ पुष्पपूजा, मासानुसार वस्तु-पुष्पपूजा-विधि (दमनक-पवित्रारोपण), काम्यपूजा-रत्नपुष्पपूजा, काम्यप्रयोगान्त-र्भूत पुरश्चरण-विधान, ग्रहणकालीन पुरश्चरण, तदंगभूत होमविधि (कुण्ड-निर्माणादिसहित), पुरश्चरण होम में काम्यद्रव्य और उनके फल, आहुतिमान, विघ्न आने पर दो अथवा तीन से नौ लक्ष तक जप का सूचन, होम के उपकरण, वेदी-प्रकार, होमाङ्ग तर्पण, मार्जन आदि विभिन्न ग्रन्थों के आधार पर वर्णित किये हैं।

अन्त में श्रीशङ्करानन्दनाथ ने निवेदन किया है कि–"हे सज्जनों ! मैंने यहाँ जो कुछ लिखा है, उसमें कुछ नया नहीं है, ऐसा समझ इसकी अवहेलना नहीं करें; क्योंकि यहाँ मैंने मूलतत्त्व से युक्त मार्ग का विमर्श करके लिखा है। अतः आप इसका परिभावन/अनुशीलन अवश्य करें"।

श्रीरामानन्द गुरु की कृपा से ज्ञानप्राप्त श्रीशङ्करानन्दनाथ ने यह ग्रन्थ ज्ञानार्णवोक्त पूजा-पद्धति के व्याख्यान के रूप में निर्मित किया है।

अपने इस ग्रन्थ को रहस्यभूत प्रमेयभासक कहकर अन्त में कामेश्वर तथा कामेश्वरी के चरणों में समर्पित किया है।

यहाँ "सुन्दरीमहोदय" नामक ग्रन्थ का पञ्चम उल्लास पूर्ण हुआ है।

शङ्करानन्दनाथस्य "श्रीसुन्दर्या महोदयः"।
सार-संक्षेपेणाञ्चितो 'रुद्रदेवत्रिपाठिना'॥

साधकानां मुदे भूयाद् ग्रन्थराजोऽयमद्भुतः।
साधना-सरणेः सम्यक् तत्त्वसारार्थबोधकः॥



# विषयानुक्रमणिका

## प्रथमोल्लासः

## द्वितीयोल्लासः



## तृतीयोल्लासः

## चतुर्थोल्लासः

**पञ्चमोल्लासः**

## ॥ श्रीगणेशाय नमः ॥
## ॥ श्रीमहात्रिपुरसुन्दर्यै नमः ॥

श्रीमत् परमहंस-परिव्राजकाचार्य-श्रीरामानन्दनाथ-
सरस्वती-पूज्यपाद-शिष्य-
कविमण्डनश्रीशम्भु-भट्टेति-पूर्वाश्रमाभिधानवता
श्रीशङ्करानन्द-नाथेन विरचितः

# सुन्दरीमहोदयः

☆ ☆ ☆

## ॥ अथ दीक्षाविधिर्न्नाम प्रथमोल्लासः ॥

[ ग्रन्थकर्तुर्मङ्गलम् ]

बालातपोल्लासित-शोण-सिन्धु-
नीरोच्छलत्कोकनदोत्तम-श्रीः।
मनो-निकुञ्जे करुणा-रसार्द्रा
काचिल्लता मे ललिताऽऽविरास्ताम् ॥ १ ॥

[ श्रीगुरु-प्रणतिः ]

यो वै दीक्षा-सेकमात्रेण दिव्यं ज्ञानं दत्त्वा मोहपाशं निकृत्य ।
दीनं सद्यो मामरक्षीद् भवाब्धेस्तं 'श्रीरामानन्दनाथं' नमामि ॥ २ ॥
यदीयवाचामृतमादृताः सकृज्जडा निपीयाशु भजन्ति जीवताम् ।
तं तन्त्रमार्गाध्ययने गुरुं नतो 'विमर्शनाथं' भगवन्तमीश्वरम् ॥ ३ ॥

[ ग्रन्थावतारः ]

ज्ञानार्णवं तन्त्रमुपाश्रिता ये न्यासादि-विस्तारकृतावशक्ताः ।
तेषामिहावश्यक-कर्मरीतिं तदुक्तमात्रां कथये विभाव्य ॥ ४ ॥
शङ्करानन्द-नाथाख्यः शम्भुदीक्षाविधिं तथा ।
नित्यं नैमित्तिकं काम्यं वक्ष्ये श्रीत्रिपुरार्चनम् ॥ ५ ॥

[ पञ्चदशी-कूट-वर्णनम्, तद्गत-विविध-विद्याविवेचनञ्च ]

शृणु देवि ! प्रवक्ष्यामि बीजं कामेश्वरी-मतम् ।
सकला भुवनेशानी कामेशी-बीजमुत्तमम् ॥
अनेन सकला विद्याः कथयामि विशेषतः ।
शक्त्यन्तस्तुर्यवर्णोऽयं कल-मध्ये सुलोचने ॥

वाग्भवं पञ्चवर्णात्म-कामबीजमथोच्यते ।
मादनं शिव-चन्द्राद्यं शिवान्तं मीनलोचने ! ॥
काम-बीजमिदं भद्रे षड्वर्णं सर्वमोहनम् ।
शक्ति-बीजं वरारोहे चन्द्राद्यं सर्व-सिद्धिदम् ॥
चतुरक्षर-रूपं तु त्र्यक्षरा त्रिपुरा परा ॥ इति ।

अस्यार्थः–

ककार-लकार-सहिता भुवनेश्वरी 'कलह्री'मिति मुख्यं बीजमिति यावत् । ककार-लकारयोर्मध्ये शक्तिरेकारस्तस्यान्ते तुर्यवर्णो दीर्घ ईकारः–'ए ई' इति, अक्षरद्वययोगे 'कएईलह्री'मिति पञ्चवर्णात्मक-मेकमक्षरं वाग्भवकूटम् । तथा मादनं क़कारः, शिवो हकारः, चन्द्रः सकारः, शिवो हंकारः । तथा च हकार-सकाराद्यः ककारो हकारान्तः कार्यः । 'हसकलह्री'मिति षड्वर्णात्मकमेकमक्षरं कामराजकूटम् । तथा चन्द्रः सकारः । पूर्वोक्तं कामेशी-बीजम् । चन्द्राद्यं 'सकलह्री'मिति चतुरक्षररूपमेकमक्षरं शक्तिकूटम् ।

भैरव्यपेक्षया परा द्वितीया त्रिपुरा। त्रिपुरायास्तृतीयो भेद इति यावत् । सेयं कामराजोपासिता विद्या ।

[कामराज-वाग्भवकूटेन कामराजादि-विद्योद्धारः]

अस्या एव विद्याया एकारेकारौ हित्वा ककारात् पूर्वं हकार-सकारयोगे लोपामुद्रा विद्या । तदुक्तम्–

कामराजाख्य-विद्यायाः शक्ति-तुर्ये[1] च सुन्दरि ।
हित्वा मुखे शिवेन्द्वाद्या लोपामुद्रा प्रकाशिता ॥ इति ।
अगस्त्योपासिता विद्या त्रैलोक्य-क्षोभ-कारिणी ।

अत्र च द्विविधा लोपामुद्रापदवाच्या । एका प्रागुक्ता पञ्चदशी 'हादिविद्या' । अपरा च वक्ष्यमाणा 'सप्तदशाक्षरी कादिविद्या' । तत्र लोपामुद्रोपासिताऽप्याद्याऽगस्त्येनाप्युपासिता । अपराऽगस्त्योपासिताऽपि लोपामुद्रोपासितापीत्यभिप्रायेणागस्त्योपासितेत्युक्तम् । तन्त्रान्तरे तथैव प्रतीतेः । अत एव मूलकृता द्वितीयां लोपामुद्रामभिप्रेत्य 'लोपामुद्राख्य-विद्याया द्वितीयाया महेश्वरि' इत्यादि-व्यवहारः कृतः ।

एवं च लोपामुद्रागुरवः काद्यगस्त्यविद्यायामपि भवन्तीत्याद्यूह्यं सुजनैः ।

---

1. शक्तिं तुर्यां पाठान्तरम् ।

तथा कामराजविद्याया वाग्भव-कूटमेव कूटत्रयम्; परन्त्वाद्ये ककारै-कारयोर्मध्ये हकारो देयः । द्वितीये ककारात् प्राग् हकारो देयः । तृतीये ककारात् प्राक् सकारो देय इत्येवं त्रिकूटाऽष्टादशाक्षरी **मानवी विद्या** । तदुक्तम्—

**कामराजाख्य-विद्याया वाग्भवेन वरानने ।**
**विद्योद्धारं प्रवक्ष्यामि शक्ति-मादन-मध्यगम् ॥**
**शिवं कुर्याद् वाग्भवे तु शिवाद्यं कामराजकम् ।**
**चन्द्राद्यं तु तृतीयं स्याद् विद्येयं मनुपूजिता ॥**

तथा कामराजविद्याया वाग्भवकूटमेव कूटत्रयम्; परन्त्वाद्ये ककारात् पूर्वं सहौ देयौ । द्वितीये ककारात् प्राक् सहौ दत्त्वा ककारोत्तरं च हकारो देयः । तृतीयकूटं त्वाद्यमेवेति त्रिकूटा द्वाविंशत्यक्षरी **चान्द्री** । तदुक्तम्—

**सहाद्यं वाग्भवं देवि चन्द्राद्यं शिव-मध्यगम् ।**
**मादनं कामराजं च[1] शक्तिबीजं सहाननम् ॥**

इति चन्द्राद्यं मादनं शिवयोर्हकारयोर्मध्यगतं कुर्यादित्यर्थः । अत्राद्य-कूटमेव शक्तिकूटमिति वदता 'तन्त्रसार'कृता सहाननमित्येव मूलपाठो धृतः । तन्त्रान्तरे 'सहाननं' शक्तिकूट[2]मुक्तम् । तथा कामराज-वाग्भव-कूटमेव कूटत्रयम् । तत्र प्रथमे ककारात् प्राग् हसौ देयौ । द्वितीये ककारात् प्राग् हसौ दत्त्वा ककारोत्तरं हकारो देयः । आद्यकूटमेव च शक्तिकूटमिति द्वाविंशत्यक्षरी त्रिकूटा **कौबेरी** । तदुक्तम्—

**हंसाद्यं वाग्भवं विद्धि शिवाद्यं सहमध्यगम् ।**
**मादनं कामराजे तु तार्त्तीयं शृणु पार्वति ॥**

हंसाद्यं शक्ति बीजं चेति । शिवाद्यं मादनं सकार-हकारयोर्मध्यगतं कुर्यादित्यर्थः । तत्र तृतीयं कूटं हसाद्यमिति **तन्त्रसारे** । तन्त्रान्तरे तु सहाद्यमिति भेदः । समाप्तः कामराज-वाग्भवकूटेन विद्योद्धारः ।

अतः परं त्रिभिरपि कूटैर्विद्या उद्ध्रियन्ते । तथा कामराजविद्याया यदाद्यं कूटद्वयं तदेव कूटद्वयम् । तृतीयं परं सकार-हकाराद्यमिति सप्तदशाक्षरी त्रिकूटाऽगस्तिविद्या । तदुक्तम्—

---

1. जे तु इति पाठान्तरम् ।
2. शक्तिबीजं सहाद्यं स्याद् विद्या. पा. ।

**कामराजाख्य-विद्यायास्तार्त्तीयं सुर-वन्दिते ।**

**सहाद्यं शक्ति-बीजं तु[1] विद्याऽगस्त्य-प्रपूजिता ॥**

**लोपामुद्रा-प्रभावेन साक्षाद् ब्रह्म-स्वरूपिणी ॥ इति ।**

अत्र लोपामुद्रेति पृथक्पदेन द्वितीयेयं लोपामुद्रा ज्ञेया । तथा कामराजवाग्भवकूटे ककारस्थाने सकारं दत्त्वा कामराजकूटे हकार-सकारयोर्विलोमं च कृत्वा शक्तिकूटे च यथास्थिते सति पञ्चदशी त्रिकूटा नन्द्याराधिता । तदुक्तम्—

**कामराजाख्य-विद्याया वाग्भवे मादनं त्यज ॥**

**चन्द्रं तत्रैव संयोज्य कामराजे ततः परम् ।**

**हित्वा चन्द्रं मुखे कुर्याद् विद्येयं नन्दि-पूजिता ॥**

शिवान्ते विद्यमानं चन्द्रं हित्वा शिवस्य मुखे आदौ कुर्यादित्यर्थः । तथा कामराजकूटद्वयमेवाद्यकूटद्वयम् । तृतीये परं ककारोत्तरं विद्यमानो लकारः सकार-ककारयोर्मध्ये देय इति पञ्चदशी **त्रिकूटैन्द्री** । तदुक्तम्—

**कामराजाख्य-विद्याया हित्वा भूमिं तृतीयके ।**

**शक्तिबीजे[2] स्थितां देवि चन्द्राधः कुरु तत्त्वतः[3] ॥**

इन्द्राराधितेति । चन्द्रः सकारस्तदुत्तरमित्यर्थः ।

अतः परं लोपामुद्रा-हादिविद्या कूटत्रयेण विद्या उद्ध्रियन्ते । तथा—

हादि-लोपामुद्राया यथास्थितमेवाद्यकूटमुच्चार्य कामराजकूटे सकारं च विहाय तृतीयकूटे सकार-ककारयोर्मध्ये हकारो देय इति पञ्चदशी त्रिकूटा सौरी । तदुक्तम्—

**लोपामुद्राख्य-विद्याया द्वितीयाया महेश्वरि ।**

**कामराजे भृगुं हित्वा तार्त्तीये सकगः[4] शिवः ॥**

**एषा विद्या वरारोहे त्रिपुरा सूर्यपूजिता ॥**

**दक्षिणामूर्त्ति-संहितायां तु —**

सहाद्यमन्ते सहयोर्मध्ये कः सूर्यपूजित इति विशेषः । अत्र च तन्त्रान्तरानुरोधेन द्वितीया लोपामुद्रापदेनानन्तरोपन्यस्तागस्ति-पूजित-कादिलोपामुद्रापेक्षया हादि-लोपामुद्रा गृह्यते । एवमग्रेऽपि विज्ञेयम्; परन्तु

---

१. शक्तिबीजं सहाद्यं स्याद् विद्या. पा. ।
२. शक्तिकण्ठे पा. ।
३. तत्र च पा. ।
४. शक्रगः पा. ।

तन्त्रान्तरेऽस्या विद्यायाः कामराजकूटे हकार-सकारयोर्वैपरीत्यं ककारोत्तरं हकारलोपः । तृतीयं कूटं तु संहितास्थमेवेति विशेषो दृष्टः । तथा हादिलोपामुद्रामेकदा त्रिकूटामुच्चार्य पुनस्तस्या एवाद्यकूटद्वयं भुवनेश्वरी-रहितं चोच्चार्य तृतीये कूटे यथास्थिते सतीयमष्टाविंशत्यक्षरी चतुष्कूटा शाम्भवी ।

भुवनेश्वरी-रहित-कूटद्वयसहित-तृतीयकूटं चैकोच्चारेण पठनीयम् । तेनैककूटासिद्धिः । तदुक्तम्—

**लोपामुद्रां द्वितीयां तु विलिख्य सुरवन्दिते ।**
**पुनर्विलिख्य तामेव चतुर्थे पञ्चमे स्थिताम् ॥**
**हित्वा तु भुवनेशानीमेकोच्चारेण चोच्चरेत् ।**
**चतुष्कूटा महाविद्या शङ्करेण प्रपूजिता ॥**

अत्रेयं विद्या 'तन्त्रसार'कृता काद्यगस्ति-लोपामुद्राभेदत्वेनोक्ता । तथा हादिलोपामुद्रा-कूटत्रयान्ते नन्दिविद्याकूटत्रयमिति षट्कूटा **वैष्णवी** त्रिंशदक्षरी । तदुक्तम्—

**लोपामुद्रां पुनर्देवि विलिखेत्तदनन्तरम् ।**
**नन्दिकेश्वरविद्या च षट्कूटा वैष्णवी भवेत् ॥ इति ।**

अत्रापि कादि-लोपामुद्रामेव गृह्णन्ति केचित् । तन्त्रान्तरे तु हादि-लोपामुद्रा-त्रिकूटान्ते सकार-हकार-लकाररूपं कूटं ततो नन्दिकेश्वर-विद्या-कामराजकूटं ततोऽगस्ति-कादिविद्या-तृतीयकूटमिति विशेषो दृष्टः । तथा कामराजत्रिकूटेष्वपि विद्यमानां भुवनेश्वरीं बिन्दुनादरहितां 'हरी'त्या-कारां व्यस्तां कुर्यादित्यष्टाक्षरी दुर्वासाराधिता । तदुक्तम्—

**कामराजाख्य-विद्यायास्त्रिकूटेषु वरानने ।**
**या स्थिता भुवनेशानीं[1] द्विधा कुरु महेश्वरि ॥**
**बिन्दुहीना नादहीना दुर्वासःपूजिता भवेत् ॥ इति ।**

यद्यपि भुवनेश्वरीं द्विधा कुर्वित्युक्तौ द्विगुणिता भुवनेश्वरीति भाति, तथापि मायास्थाने 'हरी'वर्णयुगलं च क्रमाल्लिखेदिति संहितानुरोधेन विशकलित-हकार-रीकार-रूपेणैव द्विधात्वं ज्ञेयम् । ता एताः कामराज-लोपामुद्रा-मनु-चन्द्र-कुबेरागस्ति-नन्दीन्द्र-सूर्य-शङ्कर-विष्णु-दुर्वासोभि-रुपासिता द्वादशविद्याः, 'एभिर्द्वादशसङ्ख्याकैर्मन्त्रैस्तु सुरपूजित'

---

1. भुवनेशानि पा. ।

इत्यनेनोपसंहृताः। 'तत्र विद्याद्वयं भद्रे दुर्लभं भुवनत्रये' इति मूलकृता कामराज-लोपामुद्राविद्ययोरेव प्राशस्त्यबोधनाच्छ्रीमदाचार्यैश्च **'सौन्दर्य-लहर्यां'** विद्याद्वयस्यैवोद्धारेण तत्रैवानुष्ठानबाहुल्यदर्शनाद् विद्याद्वयमेव मुख्यम् ।

**षोडशी च चतुर्विधोक्ता मूले—**

भुवनेश्वरी श्रीबीजद्वययोजनेन पूर्वोक्तविद्यैका षोडशी । इयं जाग्रद्-रूपिणी सत्त्वगुणप्रधाना केवलशक्तिरूपिणी । तदुक्तम्—

**चतुर्विध-प्रकारेण शृणु देवेशि[1] कथ्यते ।**
**चन्द्रान्तं वारुणान्तं च शक्रादिसहितं पृथक् ॥**
**वामाक्षि-बिन्दुनादाद्यं विश्वमातृकलात्मकम् ।**
**विद्यादौ योजयेद् देवि साक्षाज्जाग्रत्स्वरूपिणी ॥**
**जाग्रत्सत्त्वगुणा प्रोक्ता केवला शक्तिरूपिणी ।**
**त्रिकूटाः सकला भेदाः पञ्चकूटा भवन्ति हि ॥**
**वैष्णवी नवकूटा[2] स्यात् षट्कूटा शाङ्करी भवेत् ॥ इति ।**

चन्द्रः सकारस्तस्यान्तो हकारः । वारुणो वकारस्तस्यान्तः शकारः । शक्रो लकारस्तस्यादिः रकारः । वामाक्षिर्दीर्घ इकारः । बिन्दुः प्रसिद्धः । नादोऽर्द्धमात्रा । विद्यादौ पूर्वोक्तविद्यादौ बीजद्वयदानेन त्रिकूटाः पञ्चकूटाः षट्कूटा वैष्णव्यष्टकूटा । चतुष्कूटा शाङ्करी । षट्कूटा भवतीत्यर्थः । अत्र सर्वेऽपि स्वप्नावस्थारूप-तुर्यावस्थारूपभेदद्वयेन वक्ष्यमाणं षोडशीद्वयं सङ्गृह्य जाग्रदवस्थारूपां निरुक्तां षोडशीं द्वादशधोक्तां पञ्चदशीं च सङ्गृह्य चातुर्विध्यमाहुः । तेषाम्—

**अथ वक्ष्ये महेशानि चतुर्द्धा ज्ञानमुत्तमम् ।**
**एकधा कथितं चैतत् प्रकारान्तरमुच्यते ॥**

इत्यादिना **'संहिता'**यां पूर्वोक्त-त्रिकूटादिभेदभिन्नपञ्चदशीसाहित्येन षोडशी-त्रयसङ्ग्रहेण यच्चातुर्विध्याभिधानं तदेव भ्रममूलं मम तु प्रतिभाति । यद्यपि संहितायां तथाविधं चातुर्विध्यमुक्तम्, तथापि ज्ञानार्णवतन्त्रीय-पूर्वापरग्रन्थपर्यालोचने त्रिकूटादिभेदभिन्नपञ्चदशीसाहित्येन चातुर्विध्यम् । तथा हि आदौ द्वितीये पटले ईश्वर उवाच—

1. देवि प्रकथ्यते ।
2. वसुकूटा पा. ।

"त्रिपुरा त्रिविधा देवि बालां तु प्रथमं शृणु" ।

इत्यनेन त्रिविधां त्रिपुरां प्रतिज्ञायाष्टभिः पटलैर्बालाभैरवीरूपं भेद-द्वयमभिधाय दशम-पटले पुनः श्रीदेव्युवाच–

"द्विविधा त्रिपुरा देवी भवता प्रकटीकृता ।
त्रिविधेति यदुक्तं तत् प्रकटीकुरु शङ्कर" ॥

इति मध्ये तृतीयभेद-प्रश्नोत्तरत्वेन त्रिकूटादि-द्वादशभेदोपपादनान्ते-

"एवं त्रिधा महाविद्या महात्रिपुरसुन्दरी" ।

इत्युपसंहृत्यान्ते एकादशपटलारम्भोत्थानिकार्थम्–

इयमेका[1] महादेवि त्रिकूटा परमेश्वरी ।
वक्तुं न शक्यते सर्वैर्ब्रह्मविष्ण्वादिभिः सदा ॥
वाचा[2] च मनसा बुद्ध्या तुर्या वक्तुं न शक्यते ।
साक्षाद् ब्रह्ममयी देवी षोडशार्णस्वरूपिणी ॥
मनसैव महादेवि स्मृत्वाऽहं तु सदाशिवः ।

इति दशमः (द्वादशः) पटलः[3] समाप्तः । अस्माच्च ग्रन्थात् त्रिकूटाभेद-भिन्न-पञ्चदशीतो भिन्ना षोडश्यन्तर्गता त्रिकूटा प्रतिज्ञाता भवति । अग्रे चैकादश-(त्रयोदश)पटलारम्भे[4] पुनः देव्युवाच–

परब्रह्ममयीं साक्षाच्छ्रीविद्यां षोडशाक्षरीम् ।
कथय त्वं महाभाग यद्यहं तव वल्लभा ॥
त्रिकूटाः कथिताः सर्वाश्चतुःकूटा च शाङ्करी ।
षट्कूटा वैष्णवी चैव मनवः कथिता विभो ॥
एतास्तु सकला विद्यास्त्रिविधास्तु श्रुता मया ।
इदानीं श्रोतुमिच्छामि श्रीविद्यां षोडशाक्षरीम् ॥

इति देवीप्रश्नस्त्रिकूटादि-भेदभिन्नपञ्चदशी-व्यतिरिक्त-षोडशी-विषयकः स्पष्टं प्रतीयते । एतदुत्तरत्वेन चोपरि शिववक्तृको ग्रन्थः–

भोग-मोक्षप्रदां देवि श्रीविद्यां षोडशाक्षरीम् ।
विना गुरूपदिष्टेन शापो भवति निश्चयात् ॥

---

1. इयमेव ।
2. नो वाचा पा. ।
3. आनन्दाश्रमग्रन्थावल्या ग्रन्थाङ्के ६९तमसङ्ख्यके 'ज्ञानार्णवतन्त्र'ग्रन्थे दशमपटलोऽयं द्वादशो विद्यते ।
4. अयमुपर्युक्ते ग्रन्थे त्रयोदशः पटलः ।

चतुर्विध-प्रकारेण शृणु देवेशि कथ्यते ।
त्वं मनोहारिणी यस्मात् कथ्यते भुवि दुर्लभम् ॥

इत्यनेन 'षोडशी-निरूपणे' चातुर्विध्यं प्रतिज्ञाय—'चन्द्रान्तं वारुणान्तं चे'त्यादि 'षट्कूटा शाङ्करी भवे'दित्यन्तेन मायाद्यां प्रथमां षोडशीमभिधाय मध्ये द्वितीयोऽयं प्रकारः स्यादित्यादि पञ्चकूटा तु शाम्भवीत्यन्तेन ग्रन्थेनासम्बद्धमिव किञ्चिदुक्त्वा 'सुषुप्त्यन्ते जागरा'दावित्यारभ्य 'जगदानन्दितं भवे'दित्यन्तेन वेदादिमण्डितां तृतीयां तामभिधाय 'भेदत्रयं तु कथितं तुर्यविद्यां शृणु प्रिय' इत्यादिना चतुर्थभेदरूपा महाषोडश्युक्ता । अस्मादपि ग्रन्थात् स्पष्टमेव निरूपित-द्वादशधा भेदभिन्न-पञ्चदशीतो भेदेन चातुर्विध्यमिति प्रतीयते । अत उपक्रमादि-षड्विधतात्पर्य-ग्राहकैर्लिङ्गैः शिववक्तृकग्रन्थे षोडशीचतुष्टयं वक्तव्यमस्ति । तत्र केवल-शक्तिरूपा जाग्रन्मयी पूर्वमुपपादिता । शिव-शक्तिमयी स्वप्नावस्थारूपा वेदादिमण्डिता तुर्यावस्थारूपा महाषोडशी च उपपादयिष्येते । तत्र केवल-शक्तिरूप-शिवशक्तिरूपयोर्विद्ययोरन्तराले केवल-शिवरूपसुषुप्त्य-वस्थात्मकषोडशी-प्रतिपादको ग्रन्थोऽयम् ।

द्वितीयोऽयं प्रकारः स्याद् दुर्लभो भुवनत्रये ।
एषैव शिवरूपा तु व्यापकत्वात् सुरेश्वरि ॥
निश्चला सर्वभूतेषु सदाशिवमयी परा ।
सुषुप्तिरूपिणी साक्षाद् ब्रह्मरूपा यतः प्रिये ॥
मरणं विस्मृतिर्निद्रा मूर्च्छा च तमसावृता ।
सुषुप्तेस्तु कला ज्ञेया सुषुप्तिः शिवरूपिणी ॥
केवलाद्वय-जाग्रत्स्यात् पञ्चकूटा तु शाम्भवि । इति ।

अस्मिन् ग्रन्थे—'षट्कूटा शाङ्करी भवे'दित्यस्याग्रे 'द्वितीयोऽयं प्रकारः स्या'दिति ग्रन्थात् पूर्वं द्वितीयप्रकारप्रतिपादको ग्रन्थस्त्रुटितः । अग्रेऽपि केवलाद्वयजाग्रत् स्या'दित्यस्याग्रे 'पञ्चकूटा तु शाम्भवी'ति ग्रन्थात् प्राक् 'त्रिकूटानां चतुःकूटात्वस्य वैष्णव्याः सप्तकूटात्वस्य च' प्रतिपादको ग्रन्थस्त्रुटितः । अत एव 'पञ्चकूटा तु शाम्भवी'ति ग्रन्थशेषो ज्ञापको दृश्यते । एतादृशमसम्बद्धार्थं ग्रन्थमलग्नकं मत्त्वैवाद्यावधि 'तन्त्रसार'-कारादिभिः प्राचीनैर्नवीनैश्च 'सौभाग्यरत्नाकर'कारादिभिरुपेक्षितो न व्याख्यात इति महन्निर्युक्तिकं साहसं विदाङ्कुर्वन्त्यास्तिकभावाः । तस्मात् 'पञ्चकूटा तु शाम्भवी'ति ग्रन्थशेष-ज्ञापकबलान्माया-श्रीबीजादिव्यति-

रिक्तैकबीजाद्या पूर्वोक्ता द्वितीयेत्यनुमीयते । तदैव ह्येकबीजात्मकैक-कूटयोगेन चतुष्कूटायाः शाम्भव्याः पञ्चकूटात्वमुपपद्यते ।

किं तदेकं बीजमिति चेदुच्यते–

पूर्वोक्त-विद्यादौ यदा मायाश्रीबीजयोगस्तदा सा केवलशक्तिरूपत्वे-नोक्ता प्राक् । अग्रे च तृतीयाया मायाश्रीबीजयोगेन शक्तिरूपायाः सत्याः शिवरूपत्वमभिधातुं तस्या वेदादि-मण्डितत्वमुच्यते, तेन सा शिवशक्ति-रूपा भवतीत्यभिप्रेतं भवति । अतस्तस्यां वेदादिना शिवरूपत्वं चेत्, तर्हि मायाश्रीबीजराहित्येन केवलवेदादिप्रथमा विद्या केवलशिवरूपिणीत्यर्था-दुक्तं भवति । अतः केवलप्रणवाद्या पूर्वोक्ता विद्या **द्वितीया षोडशीति** सहृदयतयाऽऽलोचनीयमिति दिक् ।

माया-श्रीबीजाद्या पूर्वोक्ता विद्या यदा वेदादिप्रथमा तदा स्वप्ना-वस्थारूपा शिवशक्तिमयी **तृतीया षोडशी** । तदुक्तम्–

**वेदादि-मण्डिता देवि शिवशक्तिमयी सदा ।**
**तदा भेदास्तु सकलाः षट्कूटाः परमेश्वरि ॥**
**वैष्णवी नवकूटा स्यात् सप्तकूटा च शाङ्करी । इति ।**

वेदादिः प्रणवः । षट्कूटात्व-नवकूटात्व-सप्तकूटात्व–प्रदर्शनज्ञापक-बलादेवास्यां न केवलवेदादिप्रथमात्वं माया-श्रीबीजराहित्येनेत्यपास्तम् । आसां च तिसृणां षोडशकूटस्वरूप-षोडशार्णत्वासम्भवेनासम्भवदपि मुख्यं **षोडशीत्वं** वक्ष्यमाण-तुर्यभेदरूप-मुख्यषोडश्यन्तर्गतत्वेन गौणं ज्ञेयं तत्प्रयोजनत्वं च वक्ष्यते । जाग्रत्स्वप्नसुषुप्त्यवस्थारूपत्वं चासां गुरु-सम्प्रदायतोऽवगन्तव्यम् ।

श्री-माया-काम-वाग्भव-पराबीज-पञ्चकैः सम्पुटिता पूर्वोक्ता **'षट्कूटा महाषोडशी'** मुख्या । तदुक्तम्–

**आद्यं बीजद्वयं भद्रे विपरीतक्रमेण तु ।**
**विलिख्य परमेशानि ततोऽन्यानि समुद्धरेत् ॥**
**अन्तर्मुखा वरारोहे कुमारी त्रिपुरेश्वरी ।**
**एभिस्तु पञ्चसङ्ख्याकैर्बीजैः सम्पुटितां यजेत् ॥**
**षट्कूटां परमेशानि ! विद्येयं षोडशाक्षरी ।**
**त्रिकूटाः सकला भद्रे षोडशार्णा भवन्ति हि ॥**
**वैष्णव्येकोनविंशार्णा शैवी सप्तदशाक्षरी । इति ।**

आद्यं बीजद्वयं माया-श्रीबीजं तद्विपरीतं श्री-माया-बीजमित्युच्चरेत् । अन्तर्मुखा । कुमार्या अन्तः मध्ये विद्यमानं कामबीजं मुखे कुर्यात् । मुखे विद्यमानं वाग्भवमन्तर्मध्ये कुर्यादिति चार्थः। सम्पुटितामनुलोम-विलोमेन। षट्कूटामिति नवकूट-सप्तकूटयोरुपलक्षणम् । ततश्च षट्कूटानां दशबीज-संयोगे षोडशार्णत्वम् । नव-सप्त-कूटयोस्तत् संयोग एकविंशसप्तदशार्णत्वं स्पष्टमेवेति भावः । तन्त्रान्तरेऽपि—

**लक्ष्मीः परा-मदन-योनियुता च शक्ति-**
**स्तारं परां च सकलाऽप्यथ मूलविद्या ।**
**शक्त्यादिभिश्च विपरीततया प्रदिष्टः**
**श्रीमन्त्रराज उदितः परदेवतायाः ॥**

एतावता ग्रन्थ-सन्दर्भेण च प्रचरदवस्थयोः कादि-हादि-विद्ययोः प्रत्येकं चत्वारो भेदाः । **मुख्य-षोडशी चैकेति** सिद्धम् । एतदुपासकेभ्यश्च परम-सुकृत-सम्भारलब्धो **'ज्ञानार्णवतन्त्र'**मात्रोक्त-दीक्षितो यदि स्वसम्प्रदायेन तदुक्तदीक्षां दद्यात् तदा तेषां 'शाखान्तराधिकरणन्यायेन' विद्यैक्ये 'सकलतन्त्रोपसंहारन्यायेन' सर्वतन्त्रार्थानुष्ठानं युक्तमेव कर्तुं शक्नुवतां पुरुषधौरेयाणाम् । वस्तुतस्तु सर्वाङ्गानुष्ठानस्य ब्रह्मणाऽपि कर्तुमशक्तेर्या-वदेव सर्वतन्त्रीयाङ्गानुष्ठानं कर्त्तुमशक्यं तावदेव कार्यमित्यर्थेऽपि न्यायतः सिद्धे सर्वात्मनाऽपीतर-तन्त्रीयाङ्गानुष्ठानालसानां मादृशानाम् —

**"बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकल्पितम् ।**
**तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत्"** ॥

इति न्यायेन ज्ञानार्णवोक्तमात्रानुष्ठानं क्वचित् परिपूर्णत्वेनाकाङ्क्षिते लेशमात्रेण कीर्त्तितं तन्त्रान्तरसिद्धमपि अविरोधि ग्राह्यमित्यत्र पद्धतिरूपेण प्रतिपाद्यते ।

**[अथ दीक्षाविधिः]**

तत्रादौ **दीक्षाविधिर्लिख्यते**—

तत्र गुरु-शुक्रयोरस्तरहितेषु चैत्र-ज्येष्ठाषाढ-भाद्रपद-पौषमासाति-रिक्तेषु मलमास-भिन्नेषु मासेषु प्रतिपच्चतुर्थी—षष्ठ्यष्टमी-नवमी-त्रयोदशी-चतुर्दश्यमावास्यातिरिक्तासु सन्ध्या-गर्जिताद्यनध्यायादि-दोष-रहितासु तिथिषु भौम-शनि-व्यतिरिक्तेषु वासरेषु, अश्विनी-रोहिणी- पुनर्वसु-पुष्य-मघा-पूर्वाफाल्गुनी-हस्त-चित्रा-स्वात्यनुराधा-पूर्वाषाढोत्तराषाढा-शतभिषा-पूर्वभाद्रोत्तराभाद्रपदा-रेवती-नक्षत्रेषु प्रीत्यायुष्मत्—सौभाग्य-शोभन-शुभ-

सुकर्म-धृति-वृद्धि-ध्रुव-सिद्ध-हर्षण-वरीयः-शिव-सिद्ध-ब्रह्मैन्द्रेषु योगेषु, शकुनि-विष्टि-व्यतिरिक्तेषु करणेषु मेष-कर्कट-कन्या-तुला-वृश्चिक-मकर-कुम्भ-राशिषु विशेषतो ज्योतिःशास्त्रनिषिद्धदिनभिन्नेषु दिनेषु मास-पक्षादि-शोधनं विनाऽपि सङ्क्रान्ति-दमन-पवित्रार्पण-पर्व-भाद्रपदकृष्णषष्ठ्या-श्विनकृष्णत्रयोदशी-कार्त्तिक-शुक्लनवमी-श्रावणकृष्णपञ्चमी-चन्द्रार्क-ग्रहण-सत्तीर्थ-पुण्यारण्य-गुरुसन्तोषप्राप्तिदिनेषु मुमुक्षुः स्त्री चाप्य-नियतकाले शुक्लपक्षे कृष्णपक्षे पञ्चम्यवधिकाले यथाशास्त्रोक्त-लक्षणः शिष्यो यथाशास्त्रोक्तलक्षणं गुरुं सेवादिभिः प्रसाद्य ततो दीक्षां गृह्णीयात् ।

तत्र शिष्यो यथोक्तलक्षणं गुरुं पूर्वं चिरकाल-सेवितं शुश्रूषा-वित्तप्रदान-प्रमाणैर्बहुशः परितोषितं सुस्नातं कृतपूर्वाह्णिकक्रियं स्वयं च स्नातः कृतपूर्वाह्णिककृत्यः समलङ्कृतः पञ्चवाद्यघोषपुरस्सरं ब्राह्मणैः स्वस्ति वाचयित्वा—

"ॐ अद्यामुके मासि अमुकराशिगते सवितरि अमुकपक्षेऽमुकतिथौ भारतवर्षाख्यभूप्रदेशे (विशेषक्षेत्रे चेदमुकक्षेत्रे) अमुकगोत्रोऽमुकवेदान्तर्गता-मुकशाखाध्यायी (ब्राह्मणश्चेदमुकशर्मा, क्षत्रियश्चेदमुकवर्मा, वैश्यश्चेद-मुकपालितोऽहममुकचतुर्वर्गपुरुषार्थसिद्ध्यर्थं श्रीविद्याग्रहणमहं करिष्ये" इति प्राङ्मुख उदङ्मुखो वा सङ्कल्पं कृत्वा पुनः—

"पूर्वोक्तैवंगुणविशेषणविशिष्टायां पुण्यतिथौ—अमुकगोत्रिणममुक-वेदान्तर्गतामुकशाखाऽध्यायिनममुकशर्माणं श्रीविद्याग्रहणार्थं गुरुत्वेन त्वामहं वृणे" इति कुण्डल-स्वर्णयज्ञोपवीत-हार-केयूर-वलयाङ्गद-मुद्रिका-वसनादि गुरुपादयोर्विनिक्षिप्य प्रणम्य वृणुयात् । ततो 'वृतोऽस्मी'ति गुरुणा प्रतिवचने दत्ते शिष्यः कृताञ्जलिर्यथोचितं गुरुः 'कर्म्म कुरुष्वे'ति ब्रूयात् । ततो गुरुः 'करवाणी'ति प्रतिश्रुत्य पञ्चवाद्यघोषपुरःसरं मौनी समलङ्कृतो ब्राह्मणाशीर्भिरभिनन्दितः सशिष्यः सामयिकैः सार्द्धं सिन्दूर-रङ्गमालाभि-र्मण्डितं दीक्षामण्डपं प्रविशेत् ।

यद्यपि 'दीक्षापटले' मूले 'मण्डपं वेदिकां कृत्वा पुष्प-वैतान-मण्डिता'-मिति यन्मण्डपकरणमुक्तं तद् 'अनोवासोधिकरण'-न्यायेन यागमण्डप-वल्लौकिकमेव । न तु षोडश-हस्तादिप्रमाणकं शास्त्रीयम् । तथात्वे कुण्ड-निर्माण-प्रकार-कथनवन्मण्डप-प्रकार-कथनापत्तेः । अस्तु वा शक्तस्य तथाविध-मण्डपकरणम् । ततो मण्डपपश्चिमद्वारं गत्वा पादौ प्रक्षाल्य, आचम्य प्राङ्मुखः स्वासने समुपविश्य सामान्यार्घं विधाय द्वारपूजां कृत्वा

भूतोत्सारणं विधाय मण्डपान्तः प्रविश्य वास्त्वीश- दीपनाथादीन् सम्पूज्य पञ्चगव्यार्घतोयाभ्यां मण्डपाभ्यन्तरं प्रोक्ष्य मण्डपं च दशाङ्गागरुधूपैर्धूपयित्वा लाज-चन्दन-सिद्धार्थ-भस्म-दूर्वाक्षतात्मकान-स्त्रमन्त्रेणाभिमन्त्रितान् विकिरान् मण्डपाभ्यन्तरे विकीर्यास्त्रंमन्त्राभि-मन्त्रितेन कुशमुष्टिना तान् विकिरान् सम्मार्ज्यैकीकृत्यैशानकोणे तत्संस्थाप्य ब्राह्मणैः पुण्याहं वाचयित्वा ब्राह्मणान् दक्षिणादिभिः परितोष्य मण्डपमध्ये हस्तचतुष्टयायामां हस्तमात्रोन्नतां चतुरस्रां दर्पणोदरसङ्काशां पुष्पवितानमण्डितां वेदीमपक्वेष्टकाभिः स्निग्धमृद्भिर्वा विरच्य सुसमं नवयोनिचक्रं सचतुरस्रं कुङ्कुमेन सिन्दूररजसा वा विलिखेत् । यथा—

तत्र पूर्वोक्तवेद्यां प्राक्-प्रत्यग् ब्रह्मसूत्रमास्फाल्य पश्चिमतो गुरुः स्वासनस्थानं सार्द्धहस्तमितं तदग्रे पात्रस्थापनदेशं द्वादशाङ्गुलं च परित्यज्य पूर्वतो हस्तद्वयमात्रे ब्रह्मसूत्रे मध्ये चिह्नं विधाय तच्चिह्नावलम्बनेन हस्तमात्रपरिभ्रान्त्या वृत्तं निष्पाद्य तन्मध्यब्रह्मसूत्रं षोडशधा विभज्य प्रागादि-पञ्चदशचिह्नानि कृत्वा समान्तरालेषु तेषु चतुर्थ- सप्तम-द्वादशेषु तिर्यक् सूत्रत्रयं दक्षिणोत्तरवृत्तरेखावधि कृत्वा तेषु मध्यसूत्रस्य दक्षिणोत्तरवृत्तसन्धिद्वयमारभ्य ब्रह्मसूत्रस्य पश्चिम-वृत्त-सन्ध्यवधि सूत्रद्वयमास्फाल्य ततः पश्चिम-तिर्यक्-सूत्रमध्यमारभ्य प्राक्सूत्रस्य दक्षिणोत्तरवृत्तसन्ध्यवधिसूत्रद्वयमास्फाल्य ततः पश्चिमतिर्यक्सूत्रस्य दक्षिणोत्तरसूत्रवृत्तसन्धिद्वयमारभ्य ब्रह्मसूत्र-पूर्ववृत्तसन्ध्यवधि सूत्रद्वयमास्फाल्य ब्रह्मसूत्रं मार्जयित्वा सुसमं नवयोनिचक्रं निष्पाद्य चतुरस्रं कृत्वा तत्समीपे स्वासनमास्तीर्य वक्ष्यमाणविधया सम्पूज्योपविश्य मौनी जितेन्द्रियो वक्ष्यमाणविधया पूजाद्रव्याण्यासाद्य तानि तथैव संस्कृत्य ततो गुर्वादिवन्दनान्ते मूलविद्यया त्रिः पुष्पाञ्जलिं चक्रे निक्षिप्य पात्रासादनाद्यन्तर्यजनान्तं विधाय पुनर्मूलेन चक्रे पुष्पाञ्जलिं प्रक्षिप्य मध्यत्रिकोणं शालिभिः सम्पूर्य तदुपरि तन्दुलान् निक्षिप्य तत्र दर्भानास्तीर्य साग्रान् सप्तविंशतिदर्भानेकीकृत्याग्रदेशे ब्रह्मग्रन्थिं विधाय कूर्चं कृत्वा गन्धाक्षतदूर्वायुतं तत्कूर्चं शालिपुञ्जोपरि निधाय तत्र पीठपूजां कृत्वा सुवर्णादिरचितमव्रणमतिशोभनाकृतिमस्त्रेण क्षालितं चन्दनागरुकर्पूरधूपिताभ्यन्तरं त्रिगुणीकृततन्तुना वेष्टितसर्वाङ्गं गन्धपुष्पाक्षतादिभिः पूजितं कुशाक्षतसमन्वितं ससुवर्णं पुष्पराग-नीलवैडूर्य-विद्रुम-मौक्तिक-मरकतरत्न-गोमेद-पद्मरागाख्यनवरत्नोदरं कुम्भं शालिपुञ्जोपरि प्रणवमुच्चरन् संस्थाप्य

योगपीठस्य कुम्भस्य चैक्यं परिकल्प्यैकपञ्चाशद्वर्णौषधिक्वाथतापैः क्षीर-वृक्षत्वक्क्वाथतोयैर्विशेषद्रव्ययुतैर्गन्ध-पुष्प-कर्पूर-वासितैस्तीर्थजलैर्वाऽऽत्माऽ-भेदेन प्रत्यक्षरं सबिन्दुमातृकां प्रतिलोमं पठन् मूलविद्यां जपन् देवताधियैवं कुम्भमापूर्य फलैः पुष्पैरापूर्य अश्वत्थ-पनसाम्रपल्लवान् शतक्रतुलतया समाबद्ध्य कल्पद्रुमधिया कुम्भवक्त्रे निधाय तदुपरि कुम्भसजातीयं तन्दुलपूर्ण-नारिकेरफलान्वितं चषकं संस्थाप्य तत्फलं कल्पवृक्षफलं ध्यायन् आरक्तपट्टवस्त्रयुगेन कुम्भं संवेष्टयेदिति प्रधानकुम्भं संस्थाप्य स्वाग्रतस्त्रि-कोणाष्टकेषु शालिपुञ्जोपरि प्राग्वत् कुम्भानष्टौ संस्थाप्य प्रधानकुम्भे वक्ष्यमाणप्रकारेण सावरणश्रीविद्यां सम्पूज्य धूप-दीप-नैवेद्यान्तें भुञ्जानां देवीं ध्यात्वा स्वदक्षिणभागे गोमयोपलिप्तभूतले हस्तमात्रविस्तारायाम-मङ्गुष्ठपर्वमात्रोच्चम् अङ्गुष्ठमात्रोच्चं वा बालुकादिभिः समचतुरस्रं स्थण्डिलं कृत्वा शक्तौ सत्यां वक्ष्यमाणेनाग्निस्थापनादिविस्तारेणाशक्तौ नित्यहोमविधिना वह्निं संस्कृत्य तत्र देवीमावाह्य गन्धादिभिः सम्पूज्य मूलविद्यया पञ्चविंशत्याहुतीः षडङ्गमन्त्रैः षडङ्गाहुतीर्हुत्वा वह्निस्थां देवीं कुम्भस्थमूर्त्तौ विसृज्य वह्निं च प्राग्वदुद्वास्य बलिदानाद्यारात्रिकान्तं कृत्वा, कुमारी-योगिनी-सुवासिनीर्योगिनश्च सम्पूज्य मूलविद्याजपं देव्यै समर्प्य स्तुत्वा प्रणमेत् ।

ततोऽष्टकुम्भेषु क्रमेण वशिन्यष्टकं सम्पूज्य कुम्भस्थां देवीं क्षमापयेत् ।

ततो गुरुस्तृतीयभागे शिष्येण सह भुक्त्वा, आचम्य समाचान्तं शिष्यं षडङ्गन्यासयोगेन सकलीकृत्य हृन्मन्त्राभिमन्त्रितं क्षीरवृक्षादिसम्भवं दन्तकाष्ठं शिष्याय दद्यात् । ततः शिष्यः समाहितस्तेन दन्तान् विशोध्य दन्तकाष्ठं प्रक्षाल्य विसृज्य समाचान्तं शिष्यं मूलविद्यया बद्धशिखमस्त्र-मन्त्राभिरक्षितं तत्र मण्डपे संस्थाप्य गुरुस्तेन सार्द्धं कुशास्तरे तां रात्रिं शयीतेति दीक्षापूर्वदिनेऽधिवासनं कुर्यात् ।

ततोऽन्यस्मिन् दिवसे गुरुः सशिष्यो रात्रिशेषे समुत्थाय स्नानादि-नित्यकृत्यं निर्वर्त्य यागमण्डपं गत्वा द्वारपूजादि नित्यपूजाक्रमोक्त-विधिना कुम्भस्थां देवतां साङ्गां सावरणां पूर्ववत् सम्पूज्य जपान्तं समाप्य स्नातं कृतनित्यक्रियं सर्वशृङ्गारवेषाढ्यं स्ववामतः स्वासने स्थितं पञ्चगव्यं पाययित्वा गुरुस्तं दिव्यदृष्ट्या विलोक्य योगमार्गेण तदभावे विभावनया गुरुस्तदीयं हृदयं प्रविश्य तच्चैतन्यमाकृष्य स्वात्मनि संयोज्य शिष्यमूर्द्धनि षडध्वरूपं श्रीचक्रं विभाव्य स्वात्मनि स्थितं शिष्यचैतन्यं ब्रह्मरन्ध्रेण

प्रवेश्य सुषुम्णावर्त्मना शिष्यहृदये व्याप्तं विभाव्य तं दिव्यदृष्ट्या विलोकयन्नेत्रमन्त्रेण नववस्त्रपटेन शिष्यनेत्रे बद्ध्वा तं करे गृहीत्वा तस्याञ्जलिं पुष्पैरापूर्य स्वयं मूलविद्यामुच्चरन् कुम्भस्थदेव्यै पुष्पाञ्जलिं दापयित्वा नेत्रबन्धं विसृज्य–

**ॐ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।**

**चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥**

इति वाचयित्वा दर्भास्तरे तं समुपवेश्य वक्ष्यमाणभूतशुद्धिविधिं शिष्यदेहे संहृत्योत्पाद्य तद्देहे वक्ष्यमाणषोढाद्यखिलन्यासजातं विन्यस्य पञ्चोपचारैः कुम्भस्थां देवीं सम्पूज्य षडङ्गन्यासेन गुरुः शिष्यं सकलीकृत्य मण्डपाद् बहिरुत्तरस्यां क्वचित् सुसमे श्लक्ष्णे भूतले स्वलङ्कृतं शिष्यं भद्रासने समुपवेश्य पञ्चवाद्यघोषपुरस्सरं ब्राह्मणाशीर्भिः सह गुरुर्मध्यकुम्भमुत्थाप्याष्टाभिः सुवासिनीभिरुद्धृतैरष्टभिः कुम्भैः सह कुम्भमुखस्थान् सुरद्रुमान् शिष्यमूर्ध्नि निधाय विलोममातृकां मूलविद्यां च जपन् उदङ्मुखं शिष्यमभिषिच्य शुद्धजलेनाचान्तं शिष्यं षडङ्गन्यासेन सकलीकुर्यात् ।

ततः शिष्योऽप्युत्थाय सुधौते शुक्ले नूतने वाससी परिधायाचम्य मौनी कृताञ्जलिर्गुरुसन्निधौ तिष्ठेत् । ततो गुरुः प्राङ्मुखः पूर्वोद्धृते कुम्भाधस्तननवकोणचक्रे उदङ्मुखं शिष्यं समुपवेश्य तस्मिन् सङ्क्रान्तां स्वेष्टदेवतां गन्धादिभिरभ्यर्च्य पञ्चोपचारैः सम्पूज्य शिष्य-देवतयोरैक्यं सञ्चिन्तयन् श्रीपात्रामृतेन वक्ष्यमाणविधया शिष्यस्य तत्त्वशोधनं कारयित्वा तस्य पाशच्छेदं कुर्यात् । इतोऽनन्तरमाज्ञासङ्क्रमणं कुर्याद् यावन्निश्चलता भवेदित्यादिपाशच्छेदप्रतिपादको मूलग्रन्थो लग्नक इव तस्यायं गुरुसाङ्केतिकोऽर्थः । योगाभ्यासरतेन गुरुणा स्वदृष्टेः शिष्यदृष्टेश्च परस्परमेलने कृते आज्ञाचक्रसङ्क्रमाच्छिष्यदेहमन्तःप्रविश्य वेधदीक्षाप्रकारेण मूलाधारादि-षट्चक्रभेदनरूपेण शिष्यं विद्धं कृत्वाऽनन्तरं ज्ञानोपदेशेन पाशच्छेदनपूर्वकं विद्योपदेशः कार्य इति मुख्यः पक्षः । तमिमं शाम्भवं वेधमाचक्षते । प्रायश्चैतादृशवेधदीक्षाकरो गुरुस्तद्योग्यः शिष्यश्च कलौ दुर्लभ इत्युक्तमाचार्यैः । अतः केवल-राजयोगिभिर्वाच्यवृत्त्या सकलबोधः कर्त्तव्यः, स च नैश्चल्यं विना न भवत्येतदर्थं श्रीपात्रामृतरसेन सुखस्थायित्वरूपं नैश्चल्यं सम्पाद्य या तदानीमुत्पन्ना निश्चलावस्था

तत्स्वरूपबोधनद्वारा युक्त्या बोधितं ब्रह्मरूपत्वं षट्चक्रभेदबोधनद्वारेण बोधनीयम् । तस्यायं प्रकारः—

यन्निश्चलं वास्तवं रूपं यस्मिन् जाते नास्तीत्येवं शून्यमिव भासते तद् ब्रह्म **शिवपुरुषशब्दैर्व्यवह्रियते** । तन्निष्ठा तदावरिका सङ्कल्प-विकल्प-मनोरूप-पूर्वावस्थान्तर्निगूढ-सत्त्व-तमोगुणा सकलवेदान्तप्रतिपाद्या शून्यातिरिक्ता ब्रह्मसम्बन्धावच्छिन्ना द्वितीया कोटिः **प्रकृति-शक्तिपदाभ्या**-मुच्यते । यामुन्मनीमिति सप्तदशीं कलामाचष्टे मूलकारः । सैव किञ्चि-दुद्रिक्त-सत्त्व-तमोगुणा सङ्कल्प-विकल्पावस्थापन्ना सती मनःशब्दवाच्यायां **तुरीयामाचष्टे** । मनसश्च मायावस्थात्वं तत्र तत्राध्यात्मग्रन्थेषु स्पष्टम् ।

सैव यदा गुणद्वयमध्ये तमोगुणमज्ञानरूपमादाय स्वात्म-स्वरूप-सम्बद्धा सती तत्प्रकाशेन चन्द्रप्रकाशेन राहुवद्-भासमाना **सुषुप्तिरुच्यते** । अस्यां च शक्तेर्विपरीतापादनसामर्थ्याभावाच्छिवप्रकाशाधिक्यम् । सैव यदा तमः-सत्त्वसंयोगेनोत्पन्नं रजोगुणमादाय स्वात्मशिवस्वरूपं 'नास्ति न भासते' इत्येवमापाद्य शिवप्रकाशाच्छादिका **स्वप्नावस्थोच्यते** । अस्यां च शिव-शक्त्योरुभयोर्विद्यमानत्वेऽपि शिवप्रकाशावरणात् शक्तेः किञ्चिदाधिक्यम् । सैव यदा शिवरूपं निराकृत्यैव सत्त्वगुणमादाय स्वात्मानमेवात्मत्वेन निक्षिप्य विस्मरत्येवात्मानं तदा **जाग्रदवस्थोच्यते** । अस्यां च शिवांशस्य सर्वथान्यथाकरणात् शक्तेरेवाधिक्यम् ।

एतासां च चतसृणामवस्थानां मध्ये यस्यां दशायां याऽवस्थोत्पद्यते, तस्यां दशायां प्रत्येकं चेतस्रः कला उत्पद्यन्ते । तत्र जाग्रत उत्पत्ति-जागर-बोध-मनो-व्यावृत्तयश्चतस्रः । स्वप्नावस्थाया अभिलाष-भ्रम-चिन्ता-स्मृति-रूपाः । सुषुप्तेर्मरण-विस्मृति-मूर्च्छा-निद्रारूपाः । तुर्याया वैराग्य-मुमुक्षा-समाधि-विवेकाख्या भवन्ति ।

तत्र शिष्यस्य षोडशार्णोपदेशे तद्देहे मूलाधार-स्वाधिष्ठान-मणिपूरा-नाहत-विशुद्धाज्ञा-बिद्वर्धेन्दु-रोधिनी-नाद-नादान्त-शक्ति-व्यापिका-समनोन्मनी-ध्रुवमण्डल-रूप-षोडशस्थानेषु तस्याः षोडशबीजानि विभाव्य पञ्चदशाक्षर्युपदेशे तस्याः पञ्चदशाक्षराणि पञ्चदशस्थानेषु तदूर्ध्वं समस्तविद्यामयीं सबिन्दुचतुर्थस्वरात्मिकां महाकामकलां सञ्चिन्त्येत्येवं षोडशबीजेषु पूर्वोक्ता उत्पत्त्यादि-षोडशकला लीना विभावयेत् । तदा च यदा ताः कला लीनास्तदा तूष्णीं सङ्कल्प-विकल्पात्मकं मनस्तिष्ठति । सेयं **तुरीयावस्था** ।

तस्याश्चाभ्यासपरिपाकेन धन-पुत्रादिमूले नानापातमयपत्रयुतेऽभिलाष-प्रसूनभरिते पुण्य-पापफलान्विते संसारवृक्षे श्रुति-स्मृतिशाखाद्वये निषण्णं मोह-मत्सर-काम-क्रोधाहङ्कार-मदमय-पिच्छबहुलाभ्यां सङ्कल्प-विकल्प-रूप-पक्षाभ्यामतिचञ्चलं तृष्णा-चञ्चुपुटं कृत्याकृत्य-पदद्वयं शिष्यस्य मनः-पक्षिणं ज्ञानोपदेश-लक्षणपाशेन बध्वा श्रीगुरुकृपाकटाक्षरूपशस्त्रच्छिन्न-पक्षद्वयतया निश्चलीभूता मनःपक्ष्यवस्थोन्मनीति **सप्तदशी कलोच्यते** । तामवस्थां प्राप्तस्य निःशेषत्रुटितभवपाशस्य शिष्यस्य ब्रह्मरन्ध्रे गुरुः सपुष्प-फलेन स्वदक्षिणकरेण स्पृशन् 'तत्त्वमसि ब्रह्म त्वमेवासी'ति **ब्रह्मबोधं** कृत्वा –

**सहस्रारे ब्रह्मरन्ध्रे कर्पूरधवलो गुरुः ।**
**वराभयकरो नित्यो ब्रह्मरूपी सनातनः ॥**

जागर्त्तीति गुरुस्थानं सम्बोध्य पश्चात् षट्चक्रबोधं कुर्यात् । यथा–

पाञ्चभौतिके शरीरे मेर्वाकारदण्डोऽस्ति । तस्य वामभागे इडानामिका नाडी चन्द्ररूपिणी अमृतविग्रहा शक्तिरूपा । तस्य दक्षिणभागे पिङ्गलाख्या पुंरूपा सूर्यविग्रहा । मध्ये तु मूलाधारमारभ्य ब्रह्मरन्ध्रपर्यन्तं सर्वतेजोमयी सुषुम्णा नाडी । तस्या मध्येऽतिसूक्ष्माऽमृतप्लाविनी **चित्राख्या** नाडी ।

तत्र त्रिकोणे इच्छा-ज्ञान-क्रियात्मके मूलाधारे स्वयम्भूलिङ्गं तदूर्ध्वं कलारूपं कामबीजम्, तदूर्ध्वं शिखराकारा कुण्डलिनी । तद्बाह्ये स्वर्णवर्णं द्रुतहेमसमप्रख्य-'व-श-ष-से'ति वर्णचतुष्टयरूपचतुर्दलयुतं गणेशाधिष्ठित-मुपरितनानामाधारचक्राणां मूलभूतं **मूलाधारचक्रम्** ।

तदूर्ध्वं लिङ्गदेश इन्द्रगोपप्रतीकाशं स्फुरद्विद्रुमसन्निभ–'ब-भ-म-य-र-ल'–रूपवर्णषट्करूपषड्दलं ब्रह्माधिष्ठितं स्वशब्दवाच्य-परलिङ्गा-धिष्ठानवत्त्वेन **स्वाधिष्ठानचक्रम्** ।

तदूर्ध्वं नाभिदेशे मेघतुल्यनीलवर्णं विद्युत्पुञ्जप्रभारूप–'ड-ढ-ण-त-थ-द-ध-न-प-फे'ति वर्णदशकरूप-दशदलं विष्णवधिष्ठितं मणिवद् भिन्नत्वेन **मणिपूरचक्रम्** ।

तदूर्ध्वं हृदयकमल उद्यदादित्यसङ्काशं विस्फुलिङ्ग-समानवर्णं 'क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठे'ति द्वादशवर्णरूप-द्वादशदलं बाणलिङ्गरूपशिवा-धिष्ठितं शब्दस्यानाहतत्वाद**नाहतचक्रम्** ।

तदूर्ध्वं कण्ठदेशे धूम्रवर्णं माणिक्य-सङ्काशषोडशस्वररूपषोडशदलं जीवस्य हंसरूपालोचनेन विशुद्धिकरत्वाद् **विशुद्धचक्रम्** ।

तदूर्ध्वं भ्रूमध्ये विद्युत्कोटिसमप्रभं शुभ्रवर्णं 'ह-क्ष'-रूप-वर्णद्वयदलं गुरोस्तत्राज्ञासत्त्वेनाज्ञाचक्रम् ।

तदूर्ध्वं ब्रह्मरन्ध्रे नादरूपं **सप्तमं चक्रम्** । उत्पन्नो हि नादो यत्र विश्रान्तिं प्राप्य पुनः पराङ्मुखतया परावर्त्तते, तन्नादविलयस्थानं ब्रह्मस्थानम् । तत्र सुप्ताहिसदृशाकृति-कुण्डलिनी-फूत्कारो नादः प्राणवायु-संयोगादूर्ध्वक्रमेण सञ्चरन् षट्चक्राणां दलेषु स्थित उदात्तादिस्वरै-रव्यक्तस्वरतां प्राप्तः पञ्चाशद्वर्णरूपत्वं प्राप्नोति । सर्वदा च स नादः कुण्डलिन्या उत्थितो ब्रह्मणि लीनः सन् बिन्द्वाकारताम्, परावृत्तश्च पुनः कुण्डलिन्यां तदा विसर्गरूपबिन्दुद्वयाकारतां प्राप्तः क्रमेण हकार-सकाररूपं वर्णद्वयं हंस इत्याकारद्वयमुत्पादयति ।

तत्र हंवाची पुमान् वहन् सःवाची प्रकृतिः । एवं पुं-प्रकृत्यात्मकं सदा तिष्ठति । तत्र च प्रकृतिर्यदा आश्रयं पुरुषं मत्वा तद्भाव-मात्मनोऽङ्गी-करोति, तदा वैपरीत्येन सोऽहमित्यभिमानेन संसरति । तत्रैव सकार-हकार-लोपे केवलं प्रणव एवात्माभेदतया स्थितः परानन्द-मयश्चैतन्यैक-गुणः स्थितो योगिभिर्विभाव्यते । तथा भावनया च स्थिता योगिनो गुद-मेढ्रान्तरे तां कुण्डलिनीरूपां शक्तिमाकुञ्च्योर्ध्वाभिमुखीं लिङ्गभेदक्रमेण बिन्दुचक्रं प्रापय्य तत्रत्यशम्भुना सह तामेकीकृत्य तस्मादुत्थितामृतधारया तां शक्तिं षट्चक्रदेवताश्च सन्तर्प्य मूलाधारचक्रं पुनः प्रापयन्ति । अयोगिनस्तु तां ध्यानेन सन्तर्पयन्ति । एवमर्थतः शब्दतश्च सृष्टेरेकरूपत्वेन सर्वेऽपि वर्णाः शिव-शक्त्यात्मकाः । तत्र स्वराः शक्तयः, हलः शिव इत्येवं सर्वज्ञत्वं शिष्याय दद्यात् ।

शिष्योऽनन्तरं धन-वस्त्र-स्वर्णगजाश्व-महिष-गो-क्षेत्र-ग्राम-चेटी-शतादि-रूपदक्षिणाभिर्गुरुं सन्तोषयेत् । गुरुस्तद्द्रव्यं गृहीत्वोपदिशेत् । तस्यायं प्रकारः—

**[विद्योपदेशप्रकारः]**

प्रागुक्तप्रकारेण श्रीपात्रामृतेन तत्त्वशोधनं कारयित्वा नूतनवस्त्रेण शिष्यस्य मस्तकमाच्छाद्य तस्य दक्षिणकर्णे गुरुपादुकामन्त्रान्ते स्वगुरु-परम्परामुपदिश्य तदनु बालां तदनु पञ्चसिंहासनविद्यास्तदनु आम्नाय-विद्यास्तदनु त्रिकूटां पञ्चदशीमुपदिशेत् । षोडशार्णोपदेशे तु त्रिकूट-पञ्चदश्युपदेशानन्तरं पारिभाषिक-पूर्वोक्त-षोडश्युपदेशं कुर्यात् । ततो

मुख्य-षोडशार्णोपदेशमपि वाचनिकमिच्छन्ति बहवः । नैतन्मम दीक्षा-गुरोर्मतम् । यतो मूलकृता—

**ततो रहस्यं परमं महात्रिपुरसुन्दरीम् ।**
**प्रकाशयेद् दक्षकर्णे परब्रह्ममयीं प्रिये ॥**

इत्यनेन षट्कूटान्तमुपदेशमुक्त्वा—

**सर्वसौभाग्यजननीं भोग-मोक्ष-फलप्रदाम् ।**
**श्रीविद्यां षोडशार्णां तु ब्रह्मानन्दस्फुरत्कलाम् ॥**
**न च प्रकाशयेद् देवि सर्वस्वमिव सुव्रते ।**
**वेदशास्त्रपुराणेषु यामलेष्वपि सुव्रते ॥**
**गुप्ता श्रीषोडशार्णेयं निधानमिव संस्मरेत् ॥**

इत्यादिना तु कारणपूर्ववैलक्षण्यद्योतकेनोच्चारणरू-प्रकाशस्य निषेधात् । अत एवोच्चारणाभावे संस्मरेदित्युक्तम् । 'दशमपटलसमाप्तिग्रन्थे' त्रिकूटविद्याभेदकथनान्ते पुनः –

**इयमेका महादेवि त्रिकूटा परमेश्वरि ।**

इत्यनेन कथित-त्रिकूटापेक्षया विलक्षणां षोडश्यन्तर्गतां प्रतिज्ञाय सा केति प्रश्ने—

**वक्तुं न शक्यते सर्वैर्ब्रह्म-विष्ण्वादिभिः सदा ।**
**वाचा च मनसा बुद्ध्या तुर्या वक्तुं न शक्यते ॥**
**साक्षाद् ब्रह्ममयी देवि षोडशार्णस्वरूपिणी ।**

इत्यनेनानिर्वाच्येत्युत्तरे ज्ञाते कथं तर्हि मया जप्यत इति चेत्, "मनसैव महादेवि स्मृत्वाऽहं तु सदाशिवः" इति मानसस्मरणमेवोक्तम्, न तु वाचनिकत्वम् । न च 'वाचा च मनसा बुद्ध्या तुर्या वक्तुं न शक्यते' इति वाचनिकत्वनिषेधवन्मानसत्वनिषेधोऽपि कृत एवेत्यकामेनाप्य-निर्वाच्यत्व-प्रशंसामात्रपरत्वं वक्तव्यमिति वाच्यम्, तथात्वे 'मनसैव महादेवि स्मृत्वाऽहं तु सदाशिवः' इत्युत्तरार्द्धे मानसस्मरणप्रतिपादन-विरोधापत्तेः । अतो 'नान्तरिक्षे न दिवि' विद्या मनसा बुद्ध्या च वक्तुं शक्यते, सा कथं पुनर्वाचा वक्तुं शक्यत इति कैमुतिकन्यायेन नित्यानुवादो वाचनिकत्व-निषेधोपोद्बलक एवेति तत्त्वम् ।

षोडशार्णप्रस्तावारम्भे एकादशपटलेऽपि—

**देयं तु सकलं भद्रे साम्राज्यमपि पार्वति ।**
**शिरोऽपि प्राणसहितं न देया षोडशाक्षरी ॥ इति ।**

अनेनाऽदेयत्वं प्रतिज्ञाय तदुपपादनार्थम्–

**उच्चार्यमाणा ये मन्त्रास्ते सर्वे वाचनिकाः प्रिये ।**
**उच्चाररहिता देवि श्रीविद्या षोडशाक्षरी ॥**

इत्यादिना वर्णवद्-दृश्यमानत्वेऽपि वास्तववर्णत्वाभावेनोच्चार्यमाणत्वं नास्तीत्युक्तम् । युक्तं चैतत् । पञ्च-षडक्षररूपैकैक-कूटरूपैकैकबीजस्य सन्धिरूपेणोच्चारणं मनुष्यैरशक्यमेव । अत एव पञ्चदश्यां कूटत्रयस्य विरलाक्षरतयोच्चारणेऽपि पञ्चदशीत्वं न व्याहन्यते । षोडशार्णायां तु तथोच्चारणे षोडशार्णवत्त्वहानिरेव महद् दूषणम् । न हि पञ्चदश्यामपि त्रिकूटत्वहानिरूपं दूषणं सम्भवति। विरलाक्षरतयोच्चार्यमाणेऽपि त्रिकूटत्वाहानेः । तस्मात् षोडशार्णाया न वाचनिकमुच्चारणं येनोपदिश्येत । अत एव मानसव्यापारवत्त्वसादृश्येन तुरीयावस्थात्वेनोपमिता षोडशार्णा प्राक् । एतेन त्रिकूटाया उपदेशावश्यकत्वेऽपि पारिभाषिकषोडश्युपदेशे मुख्यषोडश्युपदेशे नास्त्येव प्रमाणाभावादिति निरस्तम् । तदुपदेशाभावे तासां जाग्रत्सुषुप्तिस्वप्नावस्थात्वकथनस्य वैयर्थ्यापत्तेः । मुख्यषोडश्यन्तर्गतत्वेन त्रिकूटाया इव पञ्चकूट-चतुष्कूट-षट्कूटोपदेशस्यावश्यकत्वाच्च ।

वस्तुतस्तु गौणषोडश्या अपि न वाचिक उपदेश इति वक्ष्यते । तस्मात् षट्कूटान्ते वचनेनोपदिश्य मुख्यषोडशार्णां भूमौ संलिख्य पुष्पादिभिः सम्पूज्य मनसा सञ्जप्य शिष्याय प्रदर्शयेत् । कथञ्चिदत्यादरयुक्तः प्राणप्रियः शिष्य उपदेशे निर्बन्धं कुर्यात्, तदा गुरुर्निधानमिवोक्तमप्यनुक्तप्रायं भवति, इति बुद्ध्या झटिति एकोच्चारेण वर्णानां दक्षिणकर्णस्पर्शमात्रं कुर्यात् । वैशद्येन ज्ञानार्थं लिखित्वा प्रदर्शनमेव ।

अथ कदाचित् सकृदुच्चारमात्रेण फलासत्त्वं मन्यमानो न श्रद्धां कुर्याच्छिष्यस्तदा तस्य विश्वासातिशयोत्पादनायैकोच्चारणस्य फलबाहुल्यं दर्शयति मूलकारः ।

**एकोच्चारेण देवेशि ! वाजपेयस्य कोटयः ।**

इत्यादिना ग्रन्थेन । यद्यपि मूले लिखित्वा प्रदर्शनेनोक्तं तथाप्यपेक्षितत्वात्–

**'स्मर्तव्या गुरवः सर्वे सम्यक् प्रणतिपूर्वकम् ।**
**भूमौ लिखित्वा विद्यां तु सम्यक् पुष्पादिभिर्यजेत् ॥**
**शिष्याय दर्शयेद् विद्यां जप्त्वा च दशधा प्रिये ।'**

इत्यादि-संहितास्थमुक्तमिति न दोषः ।

एवं षोडशार्णामुपदिश्यानन्तरं चक्रपूजोपयोगिन्यो या या विद्या अस्मिंस्तन्त्रं उद्धृतास्ताः सर्वा उपदिशेत् । ततो मस्तकस्थं वस्त्रमपाकृत्य गुरुः शिष्यनामप्रथमार्णयुक्तमानन्दनाथशब्दान्तममुकानन्दनाथो भवेति नाम कुर्यात् ।

ततः शिष्यः प्राणानायम्य षडङ्गन्यासपूर्वकं गुरूपदिष्टां मूलविद्यामष्टोत्तरशतमष्टधा वा जप्त्वा जपं समर्प्य गुरुदेवतात्मनामैक्यं भावयन् देवतात्मकं श्रीगुरुं ध्यायन् दण्डवत् प्रणम्य तस्य पादद्वयं 'कृतार्थोऽस्मी'ति वदन् स्वशिरसि निधाय प्रणमेत् । ततो गुरुः –

उत्तिष्ठ वत्स मुक्तोऽसि सम्यगाचारवान् भव ।
कीर्त्तिः श्रीः कान्तिरतुला बलारोग्यं सदाऽस्तु ते ॥

इति वदन् शिष्यमुत्थाप्य परिरभ्य मूर्द्धन्याघ्राय यथाऽधिकारं पारम्पर्यक्रमं समयाचारादिकं बोधयेत् । ततः शिष्यः प्रहृष्टमना गुरुं यथावदभ्यर्च्य कुमारीः सुवासिनीः सामयिकाँश्च भक्ष्य-भोज्य-वस्त्रालङ्कार-भूरि-दक्षिणाद्यैस्तोषयेत् । स्वयं च गुरु-शिष्याभ्यां भोजनं कार्यमिति संक्षेपतो दीक्षाविधिः ।

[गुरुपादुका-मन्त्रोपदेशः]

यद्यपि मूलकृता बालोपदेशात् प्राक् गुरुपादुकामन्त्रोपदेशो न विहितस्तथापि बालोपदिष्टेः पूर्वमात्मनः षड्भावयुक्तां दद्यादिति परशुराम-(कल्प)सूत्रे षड्गुरुपरम्परान्तं गुरुपादुकामन्त्रोपदेशो विहितो द्रष्टव्यः । गुरुपादुकामन्त्रस्तूद्धृतः 'संहिता'याम्–

हस्रूमात्मकमालिख्य हसक्षमलवानियान् ।
वह्नियुक्ताँस्त्रिधाऽऽलेख्य त्रिधा संयोज्य च स्वरैः ॥
मुखवेष्टन-वामाङ्ग-श्रुतिनेत्रैश्च मण्डितैः ।
बीजत्रयमिदं भद्रे बिन्दुनाद-कलात्मकम् ॥
श्रीपरान्ते पावकेति सर्वाराध्यपदं लिखेत् ।
सर्वमूर्द्धपरान्ते च नाथ-सर्वगुरुं स्वयम् ॥
गुरुश्रीगुरुनाथान्ते रहसक्षमलाम्बुवान् ।
रेफदीर्घश्रुतियुतान् बिन्दुनादकलात्मकान् ॥
पिण्डीकृत्य लिखेदाद्यं चतुर्थं च ततो लिखेत् ।
तृतीयं पूर्ववल्लेख्यं द्वितीयमपि पार्वति ॥

ततः श्रीशम्भुगुर्वन्ते पुनराद्यं समालिखेत् ।
आद्यकूट-चतुष्कान्ते चाद्यं तार्त्तीयमालिखेत् ॥
वसुसङ्ख्यैश्च देवेशि चत्वारिंशद्भिरक्षरैः ।
मण्डितोऽयं मनुर्देवि स्मरेन्निजगुरुं प्रिये ॥ इति ।

अस्यार्थः—

वह्नियुक्तान् वह्नी रकारस्तद्युक्तान्, पूर्वोक्तान् । ततश्च हसक्षमलवयरेति त्रिधोच्चार्य प्रथमान्ते मुखवेष्टनमाकारो बिन्दुनादयुतो योज्यः । द्वितीयान्ते श्रुतिदीर्घ ऊकारस्तथा योज्यः । तृतीयान्ते वामनेत्रं दीर्घ ईकारस्तथा योज्यः । ततश्च 'हस्ख्रूं हसक्षमलवयरां हस० रूं हस० रीं' इत्याद्यं बीजचतुष्टयम् । तथा श्रीगुरुनाथपदान्ते रहसक्षमलवयरूमिति बीजम्, तदनन्तरं च पुनराद्यं हस्ख्रूमिति बीजं तदुपरि आदौ रां रूं री— मित्यन्तानि त्रीणि बीजानि आसन्नानि, अधुना विलोमेन रीं रूं रामित्येतानि पठनीयानीत्यर्थः । ततः श्रीशम्भुगुरुपदान्ते पुनराद्यं हस्ख्रूमिति बीजम्, आद्यं कूट-चतुष्कमाद्यं यद्बीजचतुष्टयमुक्तं तदनन्तरं प्रथम-मेवाद्यं हस्ख्रूमित्याद्यं बीजम्, तदनन्तरं च तार्त्तीयं हस० रूमित्यन्तं बीजं योज्यमिति सिंहावलोकनन्यायेनाद्यबीजचतुष्टयोत्तरबीजद्वयप्रदर्श-कोऽयमाद्य-कूटचतुष्कान्त इति श्लोकः । ततश्चैतादृशोऽयं फलितो मन्त्रः । हस्ख्रूं हसक्षमलवयरां हस० रूं हस० रीं हस्ख्रूं हस० रूं श्रीपरपावकसर्वाराध्य सर्वमूर्द्धपरनाथसर्वगुरु-स्वयंगुरु-श्रीगुरुनाथ रहसक्षमलवयरूं हस्ख्रूं हस० रीं हस० रूं हस० रां 'श्रीशम्भुगुरुहस्ख्रूमित्यष्टचत्वारिंशदक्षरः । अग्रे चानन्द-नाथशब्दान्तानि नामानि यथागुरु योजनीयानि । इति ।

[आहितदीक्षस्य शिष्यस्य नियमः]

अथ नवकलशकरणाशक्तौ भूमौ वक्ष्यमाणशङ्खस्थापनविधिना महान्तं शङ्खं संस्थाप्य तत्र वह्न्यर्कसोमकलाः सम्पूज्य प्रधानदेवीं सावरणां सम्पूज्याभिषेकं कुर्यात् । अथाऽऽहितदीक्षस्य शिष्यस्य नियमः कुलार्णवे—

गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरबुद्धिकम् ।
प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत् ॥
एकग्रामस्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद् गुरुम् ।
क्रोशमात्रस्थितो भक्त्या गुरुं प्रतिदिनं नमेत् ।
अर्द्धयोजनतः शिष्यः प्रणमेत् पञ्चपर्वसु ॥

एकयोजनमारभ्य योजनद्वादशावधि ।
दूरदेशस्थितो भक्त्या पुनस्तत्सन्निधिं गतः ॥
तत्र योजनसङ्ख्योक्तमासेन प्रणमेद् गुरुम् ।

अस्यां च दीक्षायां त्रैवर्णिकस्यैवाधिकारः,

'सर्वशास्त्रार्थ-वेदार्थज्ञानिने सुव्रताय च ॥
दीक्षा देयेति' ...................................... ॥

मूलेऽधिकार्युक्तेः । शक्तीनां तु गुरुमण्डलान्तर्दर्शनज्ञापकबलादस्त्येवाधिकार इति रहस्यम् । अथैवं दीक्षितानां सद्भक्तियुक्तानां कृतपुरश्चरणानां विदित-विविधविद्यारहस्यानां पूर्णाभिषेकाख्यो द्वितीयोऽप्यभिषेको निबन्धकारैरुक्तस्तथापि मूलानुक्तत्वात् तन्त्रान्तरोक्तग्रहणे आवश्यकत्वाभावान्नातीव सप्रयोजक इति मयोपेक्षितः ।

॥ इति श्रीरामानन्दनाथशिष्य-शङ्करानन्दनाथकृते
सुन्दरीमहोदये 'दीक्षाविधि'र्नाम
प्रथमोल्लासः ॥



## ॥ अथोपोद्घातो नाम द्वितीयोल्लासः ॥

अतः परं मदीयदीक्षागुरूपदिष्टार्थ उपोद्घातत्वेन निरूप्यते ।

**'बालां प्रकाशयेत् कर्णे दक्षिणे च ततः परम्' ।**

इत्यनेनैतदुक्तं भवति–

**त्रिपुरा त्रिविधा प्रोक्ता बालां तु प्रथमं शृणु ।**

**तथा–**

**यथा श्रीत्रिपुरा बाला तथा त्रिपुर भैरवी ।**

**तथा–**

**त्रिविधेति यदुक्तं तत् प्रकटीकुरु शङ्कर' ।**

इत्यादि मूलग्रन्थेन त्रिपुरा-नामिकायाः सकलवेदागमप्रतिपाद्याया मूल-प्रकृतेरनेकजन्मोपार्जितविलक्षण-नित्यनैमित्तिक-कर्म्म-परिपाकजन्म-सुकृत-सम्भार-शुद्धान्तःकरणानां भक्तानामनुग्रहाय बालाभैरवीसुन्दरीरूप-लीला-विग्रहत्रय-स्वीकरणं तादृश-विग्रहवद् देवताप्रकाशकविद्याभेदत्रयं चेति प्रतीयते । तत्र बालाविग्रहः षोडशवार्षिकः । भैरवी विग्रहोऽपि–

**'रक्ताम्बर-परीधानां यौवनोन्मत्तरूपिणीम्' ।**

इति ध्यानादुन्मादावस्थ-तारुण्यशीलः । सुन्दरीविग्रहस्तु षोडशवर्षोत्तरं षोडशवार्षिको नित्यगम्भीर-तारुण्यस्थायी यथोक्तध्यानरूपः । एतादृश-विग्रह-त्रय-देवताक-विद्यात्रयमध्ये तु–'बालां तु प्रथमं शृणु' इति तु शब्द-प्रथमशब्दाभ्यामितरविग्रहविद्याद्वयवैलक्षण्यसूचकाभ्यां बालाविद्यानुष्ठान-ज्ञानं विना नोत्तरविद्याज्ञानमनुष्ठानोपयोगीति ध्वनिते सति बालाविद्याया उत्तरविद्याप्रकृतित्वं व्यज्यते । बालादिशब्दाश्च तादृशे देवता-विग्रहे शक्ताः सन्तस्तत्प्रकाशकविद्यायां लाक्षणिकाः ।

अत्र चाधिगत-पद-पदार्थसङ्केतस्येह जन्मनि जन्मान्तरे वा कृत-विजातीयकर्मजन्य-शुद्धान्तःकरणस्य यच्छास्त्रत आप्तवाक्यतो वोत्पन्नं सर्वोत्कृष्टत्वादिगुणकं देवताज्ञानं तज्जन्यः पूजोद्देश्यकदेवताविषयकोऽनुराग उपासना नाम । उत्तरोपासनार्थं प्रथमोपासनावत्पुरुषानुरागस्य सर्वोत्कृष्टत्वविशिष्ट-देवताज्ञानजन्यत्वाभावान्नोपासनात्वम् । परमेश्वरानु-बुद्ध्याऽनुष्ठीयमानकर्माधिकार्य्यनुरागस्य पूजोद्देश्यदेवताविषयत्वा-

भावान्नातिव्याप्तिः । पूजा च यागादि-व्यावृत्तो धूप-दीपादिकरणको देवतोद्देशेन द्रव्यत्यागसमूहः । देवतापदं च देवतागणान्तःपातिरूढदेवतापरम् । तेन श्राद्धीय-द्रव्यत्यागेनातिव्याप्तिः । अत्र पितरो देवतेतिप्रयोगस्तु त्यज्यमानद्रव्योद्देश्यत्वरूपपारिभाषिकदेवतात्वमादाय गौणो न तु मुख्यः । मुख्यस्तु देवतागणान्तःपातिष्वेवेति न विस्तरभयात् तन्यते तत्त्वम् । तथाविधोपासनावान् पुरुष उपासक उच्यते । तमुपासकमधिकृत्य 'प्रातरुत्थानप्रभृत्यासन-विसर्जनान्तं वैदिकं तान्त्रिकं वा कर्म्मोपदिश्यते ।

तत्र पूजादेवतागुणकेति कर्म्मठसिद्धान्तः । पूजा देवतार्था गन्धपुष्पाक्षतादीनि देव्यै सम्यङ् निवेदयेत् । 'उपचारैः षोडशभिः सम्पूज्य परदेवताम्' इत्यादौ मूले चतुर्थी-द्वितीयानिर्द्देशेन तस्याः प्रधानत्व-प्रतीतेरित्युपासकसिद्धान्तः । फलं च देवता-प्रीतिरेव । तादृशफलसम्बन्धात् पूजायाः प्राधान्यम् । जपस्य स्वतन्त्रफलार्थस्यापि पूजा- साहित्येनानुष्ठाने पूजाङ्गत्वं चयनवत् । तदप्याश्रयि कर्मविधया । न्यासादिरूपाणामङ्गानां तु फलिसंस्कारद्वाराङ्गत्वम् । पात्रासादनादिरूपाणि च द्रव्यसंस्कारकाणि । कानिचित् पीठसंस्कारकाणि ।

तत्र बालापूजायाः कथम्भावाकाङ्क्षायां तदुपक्रम्य विहितान्यपेक्षितान्यङ्गानीतिकर्त्तव्यतात्वेनान्वीयते । अत एवेतरसाधारणानामपि मातृकान्यासादिरूपाणामङ्गानां विशेषाङ्गानां च यावदुपयुक्तानां मूले उपदिष्टत्वाद् दर्शपूर्णमासादिवद् बालापूजायाः प्रकृतित्वम् । यत्र हि उपयुक्तसमग्राङ्गोपदेशः सा प्रकृतिः । ततश्च दर्शपूर्णमासाविष्टोत्तर-विकृत्यनुष्ठानाधिकारवद् बालापूजाप्रकृत्यनुष्ठानोत्तरमेवोत्तर-विकृति-विद्यानुष्ठानाधिकार इत्यर्थे सिद्धे यो नाम बालामेव सर्वोत्कृष्टत्वेन यावज्जीवमुपासितुमिच्छति, तस्याऽस्तु तावन्मात्रेण कृतार्थत्वम् ।

तस्यापि चैतत्तन्त्रोक्त्यायावदङ्गमात्रानुष्ठानमेव न तु तन्त्रान्तरोपसंहारः । तथात्वे तेनैव मातृकान्यासादिप्राप्तौ पुनरुपदेशविधिवैयर्थ्यापत्तेः? भैरवी-सुन्दर्युपासकानां तु बालानुष्ठित्यैवानुष्ठानमिति स्थितिः ।एवं स्थिते पञ्चसिंहासनगता विद्याः पश्चात् प्रकाशयेद् इति पञ्चसिंहासनोपदेशविधिर्न तासां सुन्दरीविद्या-प्रकृतित्वद्योतनार्थः । तासां बालाविकृतित्वेनोपदिष्ट-समग्राङ्ग-पौष्कल्याभावात् । 'न हि भिक्षुको भिक्षुकान्तरं याचते, सत्यन्यस्मिन्नभिक्षुके' इति न्यायेन तासां बालातोऽङ्गग्रहणे तत एव सुन्दरीपूजनेऽपि धर्मलाभसम्भवाच्च ।

अत एव 'न्यासपूजादिकं सर्वं कुमार्या इव सुव्रते' इत्यनेन मूलकारस्त्रिपुरभैरवीप्रकृतित्वं बालाया दर्शयति; किन्तु सुन्दरीपूजने उपयुक्ता इति नित्याविद्यावदुपदेश्या इत्युपदेशविधानम् ।

एवं च 'पञ्चसिंहासनगता' इति पदमुपयुक्तविद्यामात्रोपलक्षणमेव । तत् सिद्धं बालापूजोत्तरपूजाप्रकृतिरिति । त्रिपुरभैरवीपूजापि त्रिपुरापूजात्वसामान्याद् यथा श्रीत्रिपुराबाला तथा त्रिपुरभैरवी । तथा 'न्यासपूजादिकं सर्वं कुमार्या इव सुव्रते' इति प्रत्यक्षवचनाच्च बालापूजा विकृतिरिति । तत्र तददतिदेशेनैवाङ्गप्राप्तिः । विशेषतो विहितध्यानमात्र मेवापूर्वाङ्गम् । उत्तरभैरव्याम्नायविद्यादेवतापूजानां विशेषविहितातिरिक्तान्योन्यसाधारणधर्माकाङ्क्षिणीनां तु यद्यपि 'विकृतीनां न परस्परं प्रकृतिविकृतिभावः' इति न, न्यायतो धर्मलाभस्तथापि तत्र तत्र पूर्ववत् पूर्ववदित्यादिप्रत्यक्षवचनेभ्यस्तत्तद्धर्मलाभस्तत्तत्पटलेषूपपादित एव मूलकृता ।

**[ सुन्दरी विद्याया द्वैविध्यम् ]**

'सुन्दरीविद्या' तु पञ्चदशी-षोडशीभेदेन द्विधा । तत्राद्या द्वादशोपपादिता दशमे पटले । तत्रापि—

**'विद्याद्वयमिदं भद्रे दुर्लभं भुवनत्रये ।'**

इति मूले कामराज-लोपामुद्रा-विद्ययोरेव प्राशस्त्यबोधनादितरासामुत्तरविद्यानां पूर्वविद्याद्वयमूलकत्वस्य स्पष्टमुपलम्भाच्च विद्याद्वयमेव प्रचरदवस्थं मुख्यमित्युक्तं प्राक् । तादृशविद्याद्वयप्रकाश्या देवता त्वेकैव सुन्दरी । तत्पूजनमप्येषा विद्या कामराजपूजितेव न संशय इति मूलवचनात् समानमेव । विशेषतो गुरुक्रमभेदस्तु मूलकृता स्पष्टीकृत एव **त्रयोदशे पटले** ।

षोडश्यपि गौण-मुख्यभेदेन चतुर्धेत्युक्तं प्राक् । तस्या अपि तथाविधैव सुन्दरी देवता । तत्र च सुन्दरीपूजायाः कथम्भावाकाङ्क्षायां त्रिपुरापूजात्वत्रिकूटापूजात्वसाधर्म्याद् बालापूजाऽतिदेशेन धर्मलाभः । पञ्चाक्षर-षडक्षर-चतुरक्षररूप-बीजत्रयस्य वाग्भव-कामराज-शक्तिबीजेत्येवंरूपनामसङ्केतकरणेन मुख्य-वाग्भव-कामराज-शक्तिबीजत्रयात्मक-बालापूजावृत्तिधर्मसमानजातीयस्य वाग्भव-कामराज-शक्तिबीजत्रयात्मक-मन्त्रकरणकपूजात्वरूपस्य विशेषधर्मस्यापि सत्त्वाच्च । अत एव—

**मूर्धादि-गलपर्यन्तं त्र्यक्षरीं विन्यसेत् क्रमात् ।**
**उभयोः सम्पुटे विद्यां त्रिबीजां विन्यसेत् प्रिये ॥**

इति 'त्र्यक्षरात्मिकायां बालायां विहिता न्यासाः पञ्चदशाक्षर्यामतिदेश-प्राप्ताः कृष्णलावघातवन्नैव लुप्यन्ते; किन्तु भवन्त्येव । लुप्यन्ते तु गौण-मुख्य-षोडश्याम् । ये तु–

**'षोडशार्णा महाविद्या श्रीविद्येत्यभिधीयते'** ।

इति 'दीक्षापटल'-परिभाषित-षोडशार्णपदवाच्य-श्रीविद्योद्देशेन विहिता धर्मास्ते तत्रैवोपहोमन्यायेनानुष्ठेयाः, न तु पञ्चदशी-गौणषोडश्योः । न हि गौण-मुख्यन्याये जागरूके सति षोडशार्णापदेन गौणषोडशीग्रहणं सम्भवति। किमर्थं तर्हि तिसृणां विद्यानां मूले षोडशीत्वव्यपदेशः कृत इति चेत् ? तदन्तर्गतत्रिकूटाया मुख्यषोडश्यन्तर्गत-त्रिकूटाया इव संहतोच्चारण-प्राप्त्यर्थ इति गृहाण । ततश्च यथा मुख्यषोडश्यन्तर्गता त्रिकूटा संश्लिष्टाक्षरा न तु पञ्चदशीवद् विरलाक्षरा । ततश्च तस्या उच्चार-राहित्येन मानसजपविषयत्वं तथा गौणषोडश्यन्तर्गतत्रिकूटानामपीति । नैतावता श्रीविद्यापदवाच्यत्वम् ।

येऽपि बालातोऽतिदेशप्राप्ता गायत्रीमन्त्रादयस्ते तावत् पञ्चदशाक्षर्य्या-मूहेन प्रयोज्याः । यथा ऐँ वाग्भवेश्वरीत्यत्र 'कएईलह्रीं' वाग्भवेश्वरीति । मुख्यषोडश्यां तु प्राकृतगायत्र्या अन्यथाकरणे प्रयोजनाभावान्मुख्यवाग्भव-कामराजशक्तिबीजत्रयात्मकप्रकृतेरपि तदन्तःपातसत्त्वेन समवायित्व-सम्भवान्नोहः; किन्तु यथास्थिता एवेति बुद्धिमद्भिरूह्यम् ।

एवं न्यायलभ्येऽर्थे स्थिरे सति यानि सुन्दरीप्रकरणे पूर्ववत् पूर्ववदित्यादि वचनानि तानि सति प्रयोजने विधायकानि, असति प्रयोजने तु अनुवादकानीत्यादिविशेषस्तत्र तत्र दर्शयिष्यत इति दिक् ।

**[ पञ्चसिंहासनगतविद्यानां विमर्शः ]**

पञ्चसिंहासनगता विद्याः पश्चात् प्रकाशयेदित्यस्यायमर्थः । पीठं तावत् समचतुरस्रं पूर्वादिचतुर्दिक्षु ब्रह्म-विष्णु-रुद्रेश्वररूप-प्रेत-पादचतुष्टयं सदाशिवप्रेतसूत्रं प्रतिदिशं प्रत्येकशक्तित्रययुतं मञ्चरूपं सत्सम्प्रदायवेद्यम् । तच्च बालायां त्रिकोणाधः।वक्ष्यमाणश्रीचक्रे तु त्रिकोणान्तर्वर्ति-कामेश्वर-स्वरूप-बिन्दुचक्राधः । ब्रह्म-विष्ण्वादीनां प्रेतत्वं द्वादशशक्तयश्च बाला-प्रकरण उपपादिताः । अग्रे चोपपादयिष्यते । तेषां पञ्चानामाकारवर्णादिकं चोक्तं **'ब्रह्माण्डपुराणे'** श्रीपुरनिर्माणप्रस्तावे ।

**तस्य मञ्चस्य पादास्तु चत्वारः परिकीर्तिताः ।**
**दशहस्तसमुन्नम्रा हस्तत्रितयवेष्टनाः ॥**

ब्रह्म-विष्णु-महेशानेश्वर-रूपत्वमागताः ।
शक्तिभावमनुप्राप्ताः सदा श्रीध्यानयोगतः ॥
एकस्तु मञ्चपादः स्याज्जपाकुसुमसन्निभः ।
ब्रह्मात्मकः स विज्ञेयो वह्निदिग्भागमाश्रितः ॥
द्वितीयो मञ्चपादस्तु महानीलोत्पलप्रभः ।
विष्ण्वात्मकः स विज्ञेयो रक्षोदिग्भागमाश्रितः ॥
तृतीयो मञ्चपादस्तु शुद्धस्फटिकनिर्मलः ।
रुद्रात्मकः स विज्ञेयो वायुदिग्भागमाश्रितः ॥
चतुर्थो मञ्चपादस्तु कर्णिकाकारसारदृक् ।
ईश्वरात्मा स विज्ञेय ईशदिग्भागमाश्रितः ॥
एते सर्वे सायुधाश्च सर्वालङ्कारभूषिताः ।
उपर्य्यधःस्तम्भरूपा मध्ये पुरुषरूपिणः ॥
तेषामुपरि मञ्चस्य फलकस्तु सदाशिवः ।
विकासि-दाडिमच्छायश्चतुर्नल्वप्रविस्तरः ॥
नल्वषट्कायामवांश्च सदा भास्वरमूर्तिमान् ॥ इति ।

परन्तु पादानामवस्थानं विदिक्षु प्रतीयते तत्र । मूले तु पूर्वादिचतुर्दिक्षु पादानामवस्थानमुक्तम् । पूर्वादिपदानां विदिग्लक्षणामभिप्रेत्येति ज्ञेयम् । तदेव सिंहासनमित्युच्यते ।

सम्पूज्य मध्ये देवेशि! प्रेतसिंहासनं यजेत् ।
तथा—
सिंहासनं समभ्यर्च्य तत आवाहनं कुरु ॥

इति बालापूजायां चतुर्थपटले तथैव व्यवहारात् । यद्यपि तथारूपमञ्चस्य समस्तस्यैव सिंहासनत्वमिति न तस्य पञ्चत्वं तथापि त्रिपुरादेव्याः पञ्चभी रूपैस्तदंशेषु पञ्चसु संस्थानादेकैकस्यापि प्रत्येकसिंहासनत्वमिति पञ्चत्वं ज्ञेयम् ।

तानि रूपाणि पञ्च पञ्चमपटलान्तरमारभ्य मूले प्रतिपादितानि । तथा हि पञ्चमपटलान्ते—

अनेन विधिना देवि पूजयेत् परमेश्वरीम् ।

इति बालापूजां समाप्याग्रे—

वर्णलक्षं जपेन्मन्त्रं तद्दशांशं हुनेत् प्रिये ।
तर्पणं तु ततः कुर्यात् सर्वसौभाग्यवान् भवेत् ॥

इति । अनेन पुरश्चरणं विधीयमानं न केवलं बालाया एव; किन्तु वक्ष्यमाणायास्त्रिपुरभैरव्या अपि बुद्ध्यताम् । एतदर्थं मध्ये—

**पञ्चसिंहासनगतां परमानन्दरूपिणीम् ।**
**पञ्चसिंहासनोन्नद्धां चित्कलां चिन्तयेत् सदा ॥**

इति श्लोकेन प्रस्तावस्त्रिपुरभैरव्याः कृतः । अनन्तरं च षष्ठे पटले 'देव्युवाचे'त्यादिना त्रिपुरा चिच्छक्तिः पञ्चसिंहासनगता केन स्वरूपेण सिंहासनं कीदृशमिति देवीकर्तृक-प्रश्नद्वयमध्ये ईश्वर उवाचे'त्यादिना त्रिपुरभैरवी देवी पञ्चसिंहासनान्वितेत्यन्तेन ग्रन्थेनाद्य प्रश्नोत्तरपरेण यथा श्रीत्रिपुराबालाविग्रहा, तथा त्रिपुरभैरवीविग्रहा सती पीठमध्ये स्वस्वरूपेण पीठपादेषु चतुर्षु स्वरूपान्तरचतुष्टयेन वक्ष्यमाणेन पञ्चसिंहासनेषु पञ्चभी रूपैरन्वयं प्राप्तेति त्रिपुरभैरवीविग्रह उक्तः । न च मूलप्रकृतेस्त्रिपुराया एव त्रिपुरभैरवीविग्रहवद् वक्ष्यमाणविग्रहचतुष्टयमस्त्विति वाच्यम्,

**'त्रिपुरा भैरवी देवी पञ्चसिंहासनान्विता' । इत्युपक्रमेण,**
**'एतामाराध्य देवेशीं महात्रिपुरभैरवीम्' ॥**

इति सप्तमपटलारम्भे मध्ये परामर्शात् पञ्चसिंहासनमयी महात्रिपुर-भैरवीति नवमपटले भैरवीप्रकरणान्ते उपसंहाराच्च त्रिपुरावतार-'सम्पत्प्रदा'-नामकत्रिपुर-भैरव्या एवावतारचतुष्टयमित्यर्थप्रतीतेः ।

**..........................सैषा त्रिपुरभैरवी ।**
**सदाशिवो महाप्रेतः केवलं निश्चलः प्रिये! ॥**
**अव्यक्तपरमानन्दो ब्रह्मानन्दमयी शिवा ।**

इति बालाप्रकरणे चतुर्थपटले व्यक्तपरमानन्दस्वरूपा सदाशिवशक्तिः शिवा-पदेन व्यवहृता । एतत्प्रकाशक-विद्या चोद्धृता मूले—

**शिवचन्द्रौ वह्निसंस्थौ वाग्भवं तदनन्तरम् ।**
**कामराजं तथा देवि शिवचन्द्रान्वितं ततः ॥**
**पृथ्वीबीजान्तवह्न्याढ्यं तार्त्तीयं शृणु पार्वति! ।**
**व्योमादि-वह्निसंस्थं तु विशेषं शृणु वल्लभे ॥**
**कुमार्याः परमेशानि हित्वा सर्वं तु बैन्दवम् ।**
**त्रिपुरा भैरवी देवी महासम्पत्प्रदा प्रिये ॥ इति ।**

अस्यार्थः—

शिव-चन्द्रौ हकार-सकारौ । वह्नी रकारः संस्थायां समाप्तौ ययोस्तथा-भूतौ । तदनन्तरं वाग्भवमिति योजने हस्रैमित्याद्यं बीजम् । ततोऽनन्तरं

प्रसिद्धं कामबीजं शिवचन्द्रान्वितं कृत्वा तदन्तर्गतपृथ्वीबीजरूपलकारान्ते रकाररूपवह्नियुतं कार्यमिति ह्स्क्ल्रीमिति द्वितीयं बीजम् । कुमार्य्यास्तृतीये बीजे विसर्गं त्यक्त्वा बिन्दौ दत्ते सति व्योमसंज्ञकहकाराद्यं वह्न्यन्तं तत् कार्यम् । ततश्च ह्स्रौमिति तृतीयं बीजमिति । सेयं बाला समान-पूज्य-देवताका त्र्यक्षरीविद्या प्रथमा मध्यतनसिंहासनविद्या । तथा सिंहासनं कीदृशमिति द्वितीयप्रश्नोत्तरपरेण–

'प्रथमं शृणु देवेशि ब्रह्मा सृष्टिकरो यथा' इत्यादि 'पञ्चसिंहासनमयी महात्रिपुरसुन्दरी' इत्यन्तेन ग्रन्थेनेतरे विग्रहाः प्रतिपाद्यन्ते । तत्र पूर्वपादरूपब्रह्मणः स्वतो निश्चलत्वेन प्रेतस्य सृष्टिकर्तृत्वं नाभूत् । तदा त्रिपुरभैरवीं शक्तिं स समाराध्यतया शक्त्या युक्तो भूत्वा सृष्टिकर्त्ता जातस्तेन चोपासनार्थं प्रार्थिता त्रिपुरभैरवी प्रसन्ना सती चैतन्यभैरवीद्वयकामेश्वरभैरवीरूपद्वयं समानध्यानं धृत्वा तिष्ठति । तत्रोपासको ब्रह्मोपास्या च तथाविग्रहवती **'त्रिपुरभैरवी'** ।; सेयं ब्रह्मशक्तिर्वामाशब्देन व्यवहृता चतुर्थपटले ।

न च समानध्यानविग्रहत्वे विग्रहभेदे किं प्रमाणमिति वाच्यम्, कामेश्वरी च रुद्रार्णेति नामभेदाद् वक्ष्यमाणमन्त्र-पूजाभेदाच्च देवताभेदप्रतीतेः । तदिदं पूर्वसिंहासनम् । अत्र च पूर्वादि दिग्विभागः प्रसिद्धपूर्वादिभेदमादायैव। तथाविधब्रह्मोपासनया शक्रः पूर्वदिक्पालको जात इत्यर्थपरे–

**ब्रह्माणं तं समाराध्य तपसा महता प्रिये ।**
**शक्रोऽभूद् देवराजोऽयं पूर्वस्यां दिशि पालकः ॥**

इति ग्रन्थे तथा प्रतीतेः । तथाविध-विग्रहद्वय-प्रकाशक-विद्याद्वयमुद्धृतं मूले–

**वाग्भवं बीजमुच्चार्य जीव-प्राण-समन्वितम् ।**
**सकला भुवनेशानी द्वितीयं बीजमुद्धृतम् ॥**
**जीवं प्राणवह्निसंस्थं शक्रस्वरविभूषितम् ।**
**सर्गाढ्यं च महेशानि विद्या त्रैलोक्यमातृका ॥**

इति **"चैतन्यभैरवीविद्या"** ।

अस्यार्थः– जीव-प्राणौ सकार-हकारौ, तत्समन्वितं वाग्भवम् । तथा च स्हैंमित्याद्यं बीजम् । सकार-ककार-लकारा यस्यां तथाभूता भुवनेशानी । तथा स्क्ल्ह्रीमिति द्वितीयं बीजम् । जीवं सकारम् । प्राणवह्नी संस्थायां समाप्तौ यस्य तथाभूतं सन्तं शक्रस्वरश्चतुर्दशस्वर औकारस्तेन विभूषितं

कृत्वा विसर्गेणाढ्यं युक्तं कुर्यात् । ततश्च 'स्ह्रौ'रिति तृतीयं बीजम् । सेयं त्र्यक्षरी चैतन्यभैरवीविद्या । तथा–

**कामेश्वरी च रुद्राणी पूर्वसिंहासने स्थिता ।**
**एतस्या एव विद्याया बीजद्वयमुदाहृतम् ॥**
**तदन्ते परमेशानि नित्यक्लिन्ने मदद्रवे ।**
**एतस्या एव तार्त्तीयं रुद्रार्णा परमेश्वरी ॥ इति ।**

एतस्याश्चैतन्यभैरव्याः । इतरः स्पष्टोऽर्थः । ततश्च "स्हैं स्क्ल्हीं नित्यक्लिन्ने मदद्रवे स्ह्रौः" इत्येकादशाक्षरी विद्या कामेश्वरी नामिका । यत्तु रुद्रार्णेति स्थाने रुद्राणीति पाठभ्रमेण रुद्राणी-भैरवीति नाम लिखनं बहुषु पद्धति-पुस्तकेषु तन्निर्मूलम् ।

एतावता च **षष्ठः पटलः** समाप्तः । तथा **सप्तमे पटले** दक्षिणपादरूप-विष्णुप्रेतस्य पालकत्वं नाभूत् । अतः स त्रिपुरभैरवीं समाराध्य स्वयं सामर्थ्यवान् पालको जातस्तदा त्रिपुरभैरवी प्रसन्ना विष्णूपासनार्थं रुद्रभैरवी-विग्रहं धृत्वा पीठ-दक्षिणपादे तिष्ठति । तत्र च रुद्रभैरवी उपास्या विष्णुश्चोपासक इति स्थितिरुक्ता । सेयं विष्णुशक्तिर्ज्येष्ठापदेन व्यवहृता चतुर्थपटले । तदिदं दक्षिणसिंहासनम् । तथाविध-विग्रह-प्रकाशक-विद्या चोद्धृता मूले ।

**शिव-चन्द्रौ मादनान्तं पान्तं वह्निसमन्वितम् ।**
**शक्तिभिन्नं बिन्दुनादकलाढ्यं वाग्भवं प्रिये ॥**
**सम्पत्प्रदाया भैरव्याः कामराजं तदेव हि ।**
**सदाशिवस्य बीजं तु महासिंहासनस्य च ॥ इति ।**

अस्यार्थः –

शिवचन्द्रौ हकार-सकारौ । मादनः ककारस्तस्यान्तः खकारः । पकार-स्यान्तः फकारः । वह्निः प्रसिद्धः । शक्तिरेकारः । बिन्दु-नादौ प्रसिद्धौ । हस्ख्फ्रें इत्याद्यं बीजम् । तदिदं वाग्भवकूटमित्युच्यते । द्वितीयं तु हस्क्लीमिति स्पष्टम् । महासिंहासनरूप-सदाशिवमनोर्बीजं हस्रौरिति तृतीयं बीजम् । सेयं त्र्यक्षरी "रुद्रभैरवी विद्या" । अत्र च–

**एवं पीठं समभ्यर्च्य ततः सिंहासनं यजेत् ।**
**अघोरविद्यारूपं च सर्वपापनिकृन्तनम् ॥**

इति मूलग्रन्थादघोरभैरवीविग्रहवत्येका देवता पूर्वोद्धृतविद्या प्रकाश्या । "अघोरे वाग्भवं तद्वत्यघोरे भुवनेश्वरी"त्यादि "द्वितीयसिंहासनगतां पूजयेद्

रुद्रभैरवी"मित्यन्तेन ग्रन्थेन च "रुद्रभैवरी-विग्रहः समन्त्र उपदिश्यत" इत्येवमर्थं परिकल्प्य पद्धति-पुस्तकेषु अघोरभैरवी-रुद्रभैरवीति पर्यायद्वयेन पूजाद्वयं लिखन्ति तेषाम्—"एवं पीठं समभ्यर्च्य ततः सिंहासनं यजेत्" इति सिंहासनशब्दप्रयोग एव भ्रममूलम् । वस्तुतस्तु पूर्वोपक्रान्त-वामाज्येष्ठादि-रूप-शक्त्यष्टकात्मक-पीठपूजानन्तरं मध्यतन-सदाशिव-महाप्रेत-पद्मासन-रूपं सिंहासनं पूजयितुमघोरमनुरुपदिश्यते ।

**अघोरे वाग्भवं तद्वत्यघोर-भुवनेश्वरी ।**
**घोर-घोरतरे चाथ श्रीं लिख्य सुरवन्दिते ॥**
**सर्वतः सर्वशर्वेभ्यो नमस्ते रुद्र इत्यपि ।**
**रूपेभ्योऽनन्तरं चोक्त्वा देव्या बीजयुगं लिखेत् ॥**
**त्रिंशद्भिश्च त्रिभिर्वर्णैर्विद्येयं कथिता प्रिये ॥**

इत्यादिना ग्रन्थेन । देव्या मूलदेव्याः । रुद्रभैरव्या बीजद्वयमन्तिममित्यर्थः । लिख्येति छान्दसम् । तदेव च "अनेन मनुना देवि यजेत् सिंहासनं बुधः" इति श्लोकेनोपसंह्रियते ।

एवं समग्र-पीठपूजानन्तरम् आवाहनादिकं कृत्वा "क्रमार्चनमतः परम्" इत्यनेन प्रधानभूत-रुद्रभैरवी-पूजाविधिरुक्त इति न देवताविग्रहद्वयमिति ध्येयम् । एतावता च "**समाप्तः सप्तमः पटलः**" ।

तथाऽष्टम-पटले पश्चिमपादरूपरुद्रप्रेतस्य स्वतो निश्चलस्य स्वतः संहार-सामर्थ्यं नाभूदतः स त्रिपुरभैरवीं समाराध्य संहारकर्त्ता जातस्तदा प्रसन्ना त्रिपुरभैरवी रुद्रोपासनार्थं षट्कूटाभैरवी-नित्याभैरवीरूप-विग्रहद्वयं विभिन्नमन्त्रसमानध्यानं धृत्वा पश्चिमे तिष्ठति । तत्रोपास्यं विग्रहद्वय-मुपासको रुद्र इति स्थितिरुक्ता । सेयं रुद्रशक्तिरिति उक्ता "चतुर्थपटले" । तत्प्रकाशक-विद्याद्वयं चोद्धृतं मूले—

**डाकिनीराकिनीबीजे लाकिनी-काकिनीयुते ।**
**बीजे आहृत्य देवेशि योजयेच्चन्द्रसूर्ययोः ॥**
**आद्यमैकार-संयुक्तमन्यदीकार-मण्डितम् ।**
**शक्र-स्वरान्वितं देवि तार्त्तीयं बीजमालिखेत् ॥ इति ॥**

अस्यार्थः— डाकिनी-राकिनीबीजे डकार-रकाररूपे बीजे, लाकिनी-काकिनीयुते लकार-ककारयुते आहृत्य चन्द्रसूर्ययोः सकार-हकाररूपबीजे योजयेत् । ततश्च डरलकसहेति । तत्राद्यं बिन्दुनादयुतमैकारसंयुक्ते । डरलकसहैमित्याद्यं बीजम् । द्वितीयं डरलकसहीमितीकारान्तम् ।

डरलकसहौमिति चतुर्दशस्वरौकारान्तं तृतीयं बीजमिति । आद्यं बीजे इति पदे द्वितीयाद्विवचनान्तम् । द्वितीयं सप्तम्यन्तम् । सेयं षट्कूटा भैरवी । अस्याः षट्कूटात्वं कूटत्रयस्य षडक्षरात्मकत्वेन ज्ञेयम् ।

**एतस्या एव विद्यायाः षड्वर्णान् क्रमतः स्थितान् ।**

**विपरीतान् कुरु प्रौढे विद्येयं भोग-मोक्षदा ॥**

नित्याख्या भैरवीति । हसकलरडैं हसकलरडीं हसकलरडौमिति "नित्या-भैरवी विद्या" ।

**एतावता च "समाप्तोऽष्टमः पटलः" ।**

तथोत्तर-पादरूपेश्वरप्रेतस्य सृष्टि-स्थिति-कर्त्तृ-हर्तृत्वरूपं स्वतो नाभूत् । अतः सोंऽपि त्रिपुरभैरवीं समाराध्य तत्सामर्थ्यवान् जातस्तदा प्रसन्ना त्रिपुरभैरवी भुवनेश्वरीभैरव्यन्नपूर्णेश्वरी भैरवीरूपविग्रहद्वयं विभिन्नमन्त्र-ध्यानपूजनमुत्तरपीठपादे धृत्वा तिष्ठतीति **नवम-पटल** उक्तम् । तत्प्रकाशक-विद्याद्वयं चोद्धृतं मूले–

**हसाद्यं वाग्भवं चाद्यं हसकान्ते सुरेश्वरि ।**

**भू-बीजं भुवनेशानी द्वितीयं बीजमुद्धरेत् ॥**

**शिव-चन्द्रौ महेशानि शक्रस्वरविभूषितौ ।**

**बिन्दु-नाद-कलायुक्तौ तृतीयं बीजमुद्धृतम् ॥**

अस्यार्थः–हकार-सकाराद्यं वाग्भवं **हसैमित्याद्यं** बीजम् । हकार-सकार-ककारान्ते भूबीजं लकारस्ततो भुवनेशानी ह्स्क्ल्ह्रीमिति द्वितीयं बीजम् । शिव-चन्द्रौ हकार-सकांरौ औकार-बिन्दु-नादयुतौ कार्यौ । ततश्च हसौमिति तृतीयं बीजम् । सेयं त्र्यक्षरी **'भुवनेश्वरी-भैरवी'** ।

**तारं च भुवनेशानी श्रीबीजं कामराजकम् ।**

**हृदन्ते भगवत्यर्णान् माहेश्वरि-पदं लिखेत् ॥**

**अन्नपूर्णेऽग्निजायां च विद्येयं विंशदक्षरी ॥ इति ।**

स्पष्टोऽर्थः । सेयं विंशत्यर्णाऽन्नपूर्णेश्वरी भैरवी । तदिदं शक्तिद्वयं शिवा-शब्देन व्यवहृतं चतुर्थे पटले । तदिदमुत्तरसिंहासनम् । यद्यप्यस्या विग्रह-द्वयदेवतायाः कुबेरप्रार्थितत्वश्रवणात् कुबेरोपास्यत्वमेव प्रतीयते, न त्वीश्वरप्रार्थितत्वम्, तथापि–

**शृणु देवि महाविद्यां चिन्तितेष्टफलप्रदाम् ।**

**यस्या विज्ञानमात्रेण भुवनाधिपतिर्भवेत् ॥**

**सदाशिव-सखा यस्मात् कुबेरः परमेश्वरि ॥ इति ।**

मूले भुवनाधिपतित्वरूपफलनिर्देशेन सदाशिवसखेति-पदेन च तथार्थस्य ध्वनितत्वान्न दोषः । न हि भुवनाधिपतित्वमीश्वरं विना कुबेरे सम्भवति । अतः सदाशिव-रूपेणेश्वरेण स्वाराधकाय सख्ये कुबेराय धनधान्य-समृद्धिर्दत्ता । ततश्च परम्परया सदाशिवेश्वरप्रार्थिता विद्या कुबेरेणापि प्रार्थितेति भावः ।

यत् तु भुवनेश्वरी-भैरव्या भेदान्तरत्रयमुपन्यस्तं "सहाद्या सैव देवेशि तदा सा सकलेश्वरी" इत्यादि ग्रन्थेन तद् येन केनचिद्भेदेन भुवनेश्वरी-भैरवीपूजनमात्रापेक्षणात् तस्य चैकेनापि प्रकारेण सम्भवादितर-स्यानुपयोगान्नोपपादितम् । एवं च पञ्चसिंहासनगता त्रिपुरभैरवी । पञ्चसिंहासनमयी महात्रिपुरभैरवीत्युपसंहारः कृतो मूले । ता एताः पञ्च-सिंहासनगता विद्या अतिगम्भीरसम्प्रदायवेद्या इत्यत उपोद्घातमध्य उपपादिताः । आम्नायविद्यास्तु तत्तत्पूजावसर उद्धरिष्यन्त इति दिक् । प्रस्तुतमनुसरामः ।

॥ इति श्रीरामानन्दनाथशिष्य-शङ्करानन्दनाथकृते
सुन्दरी-महोदये 'उपोद्घातो' नाम
द्वितीयोल्लासः ॥



# ॥ अथ तृतीयोल्लासः ॥

**[ नित्य-कृत्य-विधानम् ]**

अथैवं दीक्षादीक्षितानां प्रातरारभ्य नित्यकृत्यमुच्यते–तत्र प्रातरुत्थाय ब्रह्मरन्ध्रे निजं गुरुं स्मृत्वा पूर्वोक्तगुरुपादुकामन्त्रान्ते अमुकानन्दनाथ-परमेष्ठिगुरुपादुकाभ्यो नमः, अमुकानन्दनाथ-परमगुरुपादुकाभ्यो नमः, अमुकानन्दनाथगुरुपादुकाभ्यो नम इत्येवं त्रीन् गुरून् नत्वा श्रीपरदेवतां प्रणम्य देवीमयो भूत्वा तत्प्रभापटलेन निर्मलः सन् नद्यादौ गृहे वा मास-पक्षाद्युल्लिख्य 'परादेव्याः पूजनाय स्नानमेवं चराम्यह'मिति सङ्कल्प्य स्नानार्थं मूलमन्त्रं स्मरन्, अञ्जलौ वारि त्रिभिरभिमन्त्र्य मूर्द्धनि निक्षिप्य निमज्ज्योन्मज्य बहिरागत्य वस्त्रादि-परीधाय कुङ्कुमगन्धेन धृतत्रिपुण्ड्रः (प्रथमकूटम्) आत्मतत्त्वाय स्वाहा, (द्वितीयकूटम्) विद्यातत्त्वाय स्वाहा, (तृतीयकूटं) शिवतत्त्वाय स्वाहेत्यैवं त्रिराचम्य, (प्रथमकूटं) "देवाँस्तर्पयामि, (द्वितीयकूटं)–ऋषींस्तर्पयामि, (तृतीयकूटं) पितॄंस्तर्पयामि"–इति त्रिः सन्तर्प्य समस्तकूटैर्मूलदेवतां श्रीमहात्रिपुरसुन्दरीं तर्पयामीति सन्तर्प्य प्रत्येक-कूटेन त्रिर्देहं सम्प्रोक्ष्य, मूलमन्त्रेण 'ह्रीं हंसः' इति सूर्यमन्त्रेण वा सूर्यायार्घ्यं दत्त्वा "(प्रथमकूटं) वागीश्वरि विद्महे, (द्वितीयकूटं) कामेश्वरि धीमहि, (तृतीयकूटं) तन्नः शक्तिः प्रचोदयात्" इति गायत्रीं यथाशक्ति जप्त्वा सर्वशृङ्गारवेषाढ्यः कर्पूरघुसृणमदोद्दामलिप्ताङ्ग-कुङ्कुमारुणो नव-रत्न-रक्ताम्बर-विराजितस्ताम्बूलपूर्णवदनो मदनानन्दमानसो लाक्षाचित्र-विराजितमनेकधूपबहुलं पुष्पप्रकरभूषितं गोमयोपलिप्तं चारुपुष्पवितानितं यागमण्डपमागत्य–"

धात्रे नमः, विधात्रे नमः, गङ्गायै० यमुनायै० द्वारश्रियै० देहल्यै० वास्तु-पुरुषाय नमः इति सम्पूज्य 'सौः' 'आधारशक्ति-कमलासनाय नमः' इति रक्तं मृदुश्लक्ष्णमासनं सम्पूज्योपविशेत् । अत्र–

**प्रातरुत्थाय देवेशि ब्रह्मरन्ध्रे निजं गुरुम् ।**
**स्मृत्वा देवीमयो भूत्वा.................... ॥**

इत्यनेन बालायां विहितस्य निजगुरुस्मरणमात्रस्य सुन्दर्यामतिदेशप्राप्त-स्यानन्तरम्–

'प्रातरुत्थाय देवेशि गुरून् नत्वा स्वनामभिः ।
सन्ध्या-स्नानादिकं देवि विधाय मनुवित्तमः' ॥

इत्यनेन 'गुरुत्रयनमस्कारो' विधीयते । न चैतावता प्राक् कृतस्मरणस्य बाधः शङ्क्यः । अविरोधान्नमस्कारस्य स्मरणपूर्वकत्वाच्च । गुरुमित्येकवचनान्तपाठे 'स्वनामभिरिति बहुवचनं तत्तदुपासक-तत्तद्गुरुनामबहुत्वमादाय ज्ञेयम् ।

गुरून् नत्वैतावतैव केवल-व्यावहारिकनामोच्चारणे सिद्धे पुनः 'स्वनाम'भिरिति पदं संहितोक्त-गुरुपादुकामन्त्रपूर्वकानन्दनाथशब्दान्तनामस्मरणपूर्वकत्वं नमस्कारस्य द्योतयति । 'मनुवित्तमः' इत्यनेन प्रकृतिविकृतिभावः ज्ञानातिशययुक्त-मनुवित्त्वं द्योत्यते । तेन बालाप्रकृतितः सन्ध्यास्नानादिकं ज्ञेयमिति भावः ।

स्नानसङ्कल्पमन्त्रस्तु 'रुद्रयामले' उक्तः । यद्यपि प्रकृतौ बालायाम्–

स्नानकर्म ततः कुर्यान्मूलमन्त्रं स्मरन् बुधः ।
त्रिवारमञ्जलौ वारि मन्त्रयित्वा तु मूर्द्धनि ॥
निक्षिपेत् परमेशानि त्रिराचम्य च तर्पयेत् ।

इत्यत्रैकेन समग्रेणैव मन्त्रेण त्रिराचमनतर्पणानि प्रतीयन्ते, तथापि–

आत्मविद्याशिवैस्तत्त्वैराचमेद् विद्यया त्रिधा ।
त्रिवारं तर्पणं कुर्याद् देवर्षि-पितृ-पूर्वकम् ॥
विद्ययाऽथ ततो मन्त्री..........................॥ इति ।

संहितैक-वाक्यतानुरोधेन कूटत्रयं देवर्षिपितॄंश्चादायैव त्रिधात्वमुपपादनीयम् । अत एव 'रक्तवस्त्राङ्गरागस्तु रक्तासनगृहे स्थितः' इति संहितोक्तं मूलानुक्तमप्यविरोधि, इति रक्तमासनमुक्तम् । एवं चासनोपवेशनानन्तरं विहितास्तत्राचमनादयः पदार्था उक्ता अपि कार्याः ।

यद्यपि मूलकृताऽमुकद्रव्येण त्रिपुण्ड्रधारणमिति विशिष्य नोक्तं तथापि–

आचम्य प्राङ्मुखासीनो मूलमन्त्राभिमन्त्रितम् ।
धृत्वा भालतले भस्म पूर्ववच्च गुरुं स्मरेत् ॥ इति ।

'विशुद्धेश्वरे'–

'भस्मना तिलकं कुर्यान्मृद्भिर्वा पुण्ड्रकत्रयम्' इति, 'समयातन्त्रे' च भस्म-मृत्करणक-त्रिपुण्ड्रधारणमुक्तं द्रष्टव्यम् । तत्रापि भस्म-मृत्स्थाने 'कुङ्कुमारुण' इति । मूले कुङ्कुमारुणत्वविधानात् कुङ्कुमादिना त्रिपुण्ड्रधारणं ज्ञेयम् ।

सूर्यमन्त्रस्तु–

**शिवबीजं वह्निसंस्थं वामनेत्रविभूषितम् ।**
**बिन्दु-नाद-समायुक्तं ततो हंसः पदं लिखेत् ॥ इति ।**

शिव-वह्नि-वामनेत्राणि हकार-रकारेकाराः ।

आसन मन्त्रस्तु–

**तृतीयं बीजमुच्चार्य तत आधार-पूर्वकम् ।**
**शक्तीति पदमालिख्य कमलासनमालिखेत् ॥**
**ङेऽन्तं नमः कृत्वा................. । इति ॥**

त्र्यक्षर्या बालाया यच्छक्तिकूटरूपं तृतीयं बीजमित्यर्थः । तदासनं चतुरङ्गुलोच्चवेदिकोपरि संस्थापनीयमित्याचारो दैशिकः । गायत्र्यामूहस्तु प्रागुपपादितः । प्रकृतौ चासनोपवेशनानन्तरं भूत-त्रासनं विहितमासीत्, तदादौ न कार्यम्; किन्तु वक्ष्यमाण-मन्त्रोद्धारादिति विशेषं द्योतयितुं मनोहरे मृदुश्लक्ष्ण आसन उपविश्य त्विति तु-शब्दः प्रयुक्तो मूले । तदग्रे च–

**'मन्त्रोद्धारं प्रकुर्वीत सर्वकार्यार्थसिद्धये'**

इत्यादिना मन्त्रोद्धार-कर्तव्यता प्रतिपाद्यते । तत्र यद्यपि मन्त्राणां गुरूपदेशत आकलनात् तेषामेव च कर्म्मण्युपयोगान्नोद्धारापेक्षा प्रयोग-मध्ये, तथापि 'सर्वकार्यार्थसिद्धये' इति फलसङ्कीर्त्तनादुद्धारस्य मानस-व्यापाररूपस्य कर्त्तव्यत्वासम्भवेऽपि तत्प्रतिपादकशिववक्तृक-ग्रन्थस्यार्थ-ज्ञानपूर्वकं प्रयोगमध्येऽध्ययनं कर्त्तव्यमिति फलितोऽर्थः । तत्रापि मासपक्षा-द्युल्लिख्य 'श्रीमहात्रिपुरसुन्दरी-पूजनमहं करिष्ये' इति सङ्कल्प्य 'नव-चक्रेश्वरी-मन्त्रोद्धारः' ग्रन्थ एव पठनीयः ।

**[ नवचक्रेश्वरीमन्त्रोद्धारः ]**

**आद्यं वाग्भवमुच्चार्य्य कामबीजं द्वितीयकम् ।**
**कुमार्य्यास्तु तृतीयं तु त्रिपुरा परमेश्वरी ॥**
**करशुद्धिकरी विद्या प्रथमा परमेश्वरी ।**
**कुमारी तु द्वितीया स्यात् त्रिपुरेशी महेश्वरी ॥**
**त्रिपुरेश्यादिमं त्यक्त्वा भुवनेशीं परिक्षिपेत् ।**
**अनयात्मासनं दद्यात् सुन्दर्य्याः परमेश्वरि ॥**
**त्रिपुरेशी महेशानि त्रिबीजा हस्थिता यदा ।**
**चक्रासनगतां देवीं विद्धि त्रिपुरवासिनीम् ॥**

त्रिपुरेशि महेशानि वाग्भवे कामराजके ।
शिवचन्द्र-समायुक्ता तार्त्तीये शिवरूपिणी ।
सर्वमन्त्रासनगता त्रिपुराश्रीरियं प्रिये ।
आत्मासनगतायास्तु हित्वा तार्त्तीयमद्रिजे ॥
बले मात्मकमारोप्य साध्य-सिद्धासनस्थिता ।
त्रिपुरामालिनी प्रोक्ता सिद्धाख्यां त्रिपुरां शृणु ॥
सम्पत्प्रदा भैरवी या तस्यास्तार्त्तीय-बीजके ।
बिन्दुं हित्वा तत्र सर्गं निक्षिपेत् सुरसुन्दरि ॥
सिद्धाम्बावाहिनीमूर्त्तिर्विद्या च सुरसुन्दरि ।
मूलविद्यां शृणु प्रौढे सकलागम-सेविताम् ॥
सर्वदर्शनवन्द्यां च चित्कलामव्यये शिवे ।
भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनौ ॥
अर्द्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते ।
महात्रिपुरसुन्दर्य्या मन्त्रा मेरु-समुद्भवाः ॥ इति ॥

अस्यार्थः– यद्यपि त्रिपुराविद्या यद्वाग्भवं तदाद्यं बीजमित्याद्युद्देश्य-विधेयभावेन कुमारीविद्यैवेत्यापाततो भाति, तथापि कुमार्य्यास्तृतीयं त्विं-त्युक्तौ कुमारी द्वितीया स्यादित्यत्र तुशब्दबलान्न तादृश उद्देश्यविधेयभावः; किन्तु–"आद्यं द्वितीयं वर्णे स्यात् त्रिपुरेश्यन्तिमं लिखेत् । आद्यं द्वयं बिन्दुनादकलाढ्य"मिति संहितैकवाक्यताऽनुरोधेन यन्मातृकाया आद्यम् "अं" इति तद्वाग्भवकूटम्, यत्तस्या द्वितीयं "आं" इति तत् कामराजकूटम्, यत्कुमार्य्यास्तृतीयं कूटं 'सौ' इति तत्पुनस्तृतीयं कूटमित्यर्थः । सेयं "अं आं सौ"रिति त्र्यक्षरी "त्रिपुराविद्या" । करशुद्धिकरीति विनियोगः । त्रिपुरेशी विद्या तु बालैव प्रसिद्धा । त्रिपुरेश्याः कुमारीविद्याया आद्यं वाग्भवं त्यक्त्वा तत्र भुवनेशीबीजं दद्यात् । सेयं "ह्रीं" क्लीं सौ"रिति त्र्यक्षरी सुन्दरीविद्या । अनयाऽऽत्मासनं दद्यादित्यस्याग्रे सुन्दर्याः परमेश्वरीति संहितोक्त एव पाठो युक्तो योग्यत्वात्, न तु त्रिपुरेश्याः षडङ्गकमिति–असङ्गतार्थ इति ध्येयम् ।

तथा पूर्वोक्ता त्रिपुरेशी यदा त्रिषु बीजेषु हकारस्थिता यथा " हैं हस्क्लीं हसौ"रिति, तदेयं त्र्यक्षरी त्रिपुरवासिनी । तथा त्रिपुरेशी वाग्भवे कामबीजे च यदा शिव-चन्द्रसमायुक्ता भवति, तार्त्तीये च बीजे केवलं शिवरूपिणी । यथा–"हसैं हस्क्लीं हसौ"रिति, तदेयं त्रिपुराश्रीरिति ज्ञेया ।

तथा–आत्मासनगतायाः सुन्दरीविद्यायाः "सौ"रिति तार्त्तीयं बीजं हित्वा तत्र ब्लेमिति देयम् । यथा-ह्रीं क्लीं ब्लेमिति तदा त्रिपुरमालिनी ।

तथा सम्पत्प्रदा-भैरव्यास्तृतीये बीजे बिन्दुत्यागेन विसर्गो देयो यथा– "हस्रैं हस्क्लरीं हस्रौ"रिति तदेयं त्रिपुरासिद्धा त्रिपुराम्बा आवाहनी-विद्या मूर्त्तिविद्या चेत्येवमाख्याचतुष्टयवती ज्ञेया ।

भूमिर्लकारः, चन्द्रः सकारः, शिवो हकारः, माया ईकारः, शक्तिरेकारः, कृष्णाध्वा रकारः, मादनं ककारः, अर्द्धचन्द्र-बिन्दू प्रसिद्धौ । ततश्च "ल स ह ई ए-र क ॅ ०" इति नवार्णो मेरुः । सोऽयं मेरुर्नवाक्षरो ब्रह्माण्ड-गोलकत्वेनोपमितो मूले ।

**नवाक्षरो महामेरुरयं ब्रह्माण्डगोलकः ।**
**चतुरस्रं च कोदण्डं त्रिकोणं तत्पुटं मुखम् ॥**
**निरालम्बमिति ख्यातमेतद्ब्रह्माण्डमण्डलम् ।**
**शर्करां विकिरेत् तत्र त्रिकोणं तत्पुटं लिखेत् ॥**

इति होम-प्रकरणे संहिता-श्लोकवत् तत्पुटं नाम त्रिकोण-पुटितं षट्कोणं मुखं निरालम्बं बिन्द्वाकारमित्यर्थः ।

अस्यायमाकारः –तत्र पूर्वोक्तानां नवानामक्षराणामेतन्मण्डलोपभायां "ल ॅ ए स र ई ह क ०" इत्येवं क्रमो ज्ञेयः । तत्र लकारः पृथिवी-बीजतया चतुरस्रम् । अर्द्धमात्रा तु कोदण्डरूपा । एकार-सकार-रकार-त्रयं त्रिकोण-रूपम् । षट्कोणमीकाररूपं तदन्तर्वर्त्याकाशरूपो हकारो बिन्दुश्च मुख-मण्डले । तत्र यदीक्षणं स ककार इति भावः । एतादृश-मेरु-मण्डलात्म-काक्षरनवकं विहाय नैव त्रिपुरसुन्दरी-मन्त्राः; किन्तु ये त्रिपुरसुन्दरीमन्त्रा-स्त एतन्नवाक्षरघटिता इत्यर्थः ।

तत्र मूलविद्या ग्रन्थारम्भ एवोद्धृता । एवं मन्त्रोद्धारं कृत्वा आसने प्राङ्मुख आसीनो हस्तमात्रे समे शुद्धे भूप्रदेशे सिन्दूर-रजोभिः कुङ्कुम-रजोभिर्वा वक्ष्यमाणप्रकारेण चक्रराजं लिखेत् । अथवा हेम-रजत-ताम्र-रत्न-धातूनामन्यतमेन केनचित् पट्टं विरच्य श्रीखण्डेन रक्तचन्दनेन निर्मितपीठे संस्थाप्य सुवर्ण-शलाकया रजतशलाकया वा कस्तूरी-चन्दन-कर्पूर-गोरोचना-कुङ्कुमैर्द्रव्यैस्तत्र यन्त्रं लिखेत् ।

**[ श्रीयन्त्रलिखनप्रकारस्तद्भेदाश्च ]**

"लिखन-प्रकारो" यथा–

तत्र मध्ये हंसपदं विधाय तत्सन्दंशस्थानमवष्टभ्य प्रतिपार्श्वं यावदैच्छिकमानभ्रमेण वृत्तं निष्पाद्य तत्र प्राक् प्रत्यगायतं ब्रह्मसूत्रमास्फाल्य तदष्टचत्वारिंशदंशेन विभज्य तद्ब्रह्मसूत्रे प्रागादि-षट्-षट्पञ्चांशमाने तिर्यक् सूत्रत्रयं दत्वा पुनरपि पश्चिमादि षट्-षट्-षडंशमाने तिर्यक्सूत्रत्रयं विधाय प्रागादि तृतीयसूत्रस्य च मध्ये वक्ष्यमाणमर्मानुगुणं तिर्यक्सूत्रत्रयस्थानं कर्तव्यतया मनसा परिकल्पितैः सह नवसु तिर्यक्सूत्रेषु सर्वपश्चिमस्थं सूत्रं प्रथमसूत्रं परिकल्प्य तत्क्रमात् तेषु तृतीय-सप्तम-सूत्रद्वयं वृत्त-स्पृष्टं कृत्वा तत्-तृतीयसूत्राग्रद्वयादि-ब्रह्मसूत्र-प्रागग्रवृत्त-सम्पातान्तं सूत्रद्वयं तत्सप्तमसूत्राग्रद्वयादि-ब्रह्मसूत्र-पश्चिमाग्रवृत्तसम्पातान्तं सूत्रद्वयं च सम्भूय सूत्रचतुष्टयमास्फाल्य षट्कोणं कृत्वा पुनस्तत्प्रथमरेखा-मध्यादि-प्राङ्निर्मितषट्कोणप्राचीन-मर्मानुगुणगतिवशेन यावदष्टमरेखा-ग्रद्वयान्तं सूत्रद्वयं पुनर्नवमरेखा-मध्यादिषट्कोणस्य पश्चिममर्मानुगुण-गतिवशेन यावद् द्वितीयाग्रद्वयान्तं सूत्रद्वयं सम्भूय सूत्रचतुष्टयं मर्मचतुष्टयानुगुणमास्फाल्य पुनर्नवम-तिर्यक्सूत्रोभयपार्श्वान्तमारभ्य सप्तमाष्टम-सूत्रयोरुभयपार्श्वसम्पातस्थान-चतुष्टयरूपमर्मचतुष्टयानुगुणं ब्रह्मसूत्रस्पृष्टाग्रकं सूत्रद्वयमास्फालयेत् ।

तत्सूत्रद्वयस्य यत्र ब्रह्मसूत्रे सम्पातस्तत्-पश्चिमादि-चतुर्थतिर्यक्सूत्रस्य स्थानं भवति । पुनः सप्तमसूत्रमध्यादि-पश्चिमत उभयपार्श्वस्थमर्मद्वयानुगुण्येन यावत् प्रथमतिर्यक्सूत्रोभयपार्श्वान्तं सम्भूय चतुर्मर्मानुगुण्येन सूत्र-द्वयमास्फाल्य पुनरष्टमतिर्यक्सूत्रमध्यात् (प्रसारि), प्रसारित-सूत्रद्वयावधि-प्रसूत-चतुर्थतिर्यग्रेखाद्वयान्तं सूत्रद्वयं न्यसेत् । पुनरष्टमरेखामध्यादि-पश्चिमतः प्रसृतसूत्रद्वयस्य तुर्यरेखा-मध्यादिप्राक्प्रसृतसूत्रद्वयस्य च सम्पातद्वयानुगुणं नवमरेखामध्यात् पश्चिमतः प्रसृतोभयरेखावधि तिर्यग्-रेखां कृत्वा तदग्रद्वयमारभ्य द्वितीयरेखामध्यावधि सूत्रद्वयमास्फाल्य पुनस्तुर्यरेखामध्यादि प्राक्प्रसृतरेखाद्वयस्य सप्तमरेखा—मध्यादि-पश्चिमतः प्रसृते रेखाद्वयस्य च सम्पातद्वयानुगुणां तुरीयरेखाग्रद्वयात् पूर्वतः प्रसृतरेखा-द्वयस्पृष्टाग्रद्वयां तिर्यग्रेखां कृत्वा तदग्रद्वयमारभ्य तृतीयतिर्यक्सूत्रमध्यावधि सूत्रद्वयमास्फाल्य ब्रह्मसूत्रं मार्जयित्वा वृत्त-स्पृष्टषडस्रं तदस्पृष्टाष्टास्रमष्टादशमर्मोपेतं चतुर्विंशति-सन्धियुतं बिन्द्वादि-चतुर्दशारान्तं निष्पाद्य तदुपरि वृत्तं तत्षोडशचिह्नैः समैश्चिह्नितं कृत्वा दलमध्येष्वेकैकं चिह्नं यथा भवति तथाऽष्टदलं निर्माय पुनर्वृत्तं कृत्वा तद्द्वात्रिंशद्भिश्चिह्नैः

समैर्विभज्य दलमध्येष्वेकैकं चिह्नं यथाभवति, तथा षोडशदलं निर्माय तदुपरि वृत्तं कृत्वा, एकरेखायुतं चतुर्द्वारसहितं भूगृहं कुर्यात् ।
हस्तप्रमाणं तु 'स्वच्छन्दभैरवे'–

**'कुर्याच्च स्थण्डिले यन्त्रं हस्तमात्रं सुसुन्दरम् ।'**

प्रागादि षट्-पञ्चेत्यादि शब्दः स्वाग्रभागरूप प्रागादिपरः । यद्यप्यत्र मूले–'ईशानादग्निपर्यन्तमृजुरेखां समालिखेत्' इत्यादिना बिन्दुलिखनं विना त्रिकोणमारभ्य चक्रनिर्माणप्रकार उक्त इति नोक्तस्य षट्कोणारम्भप्रकारस्य मूलस्थत्वं तथापि सन्धिमर्मानुगुणप्रयोजकीभूतस्य ब्रह्मसूत्रविभागस्य स्पष्टमकरणात् समरेख-मर्मानुगुण-सन्धिभेदवच्चक्रलिखनस्याशक्यत्वेन भ्रमेण वृत्तं निष्पाद्य सुसमे चतुरस्रके तत्र प्रमृज्य तिर्यङ् मध्यस्थं सूत्रं तिर्यङ् निपातयेत् ।

**'सूत्राणि नव तेषु द्वे वृत्त-स्पष्टोभयाग्रके' इत्यारभ्य**
**विधाय वृत्तयोर्मध्यं चत्वारिंशत्-सहाष्टभिः ।**
**प्राणादि-तिर्यक्सूत्राणि षट्सु षट्सु च पञ्चसु ॥**
**पश्चिमात् षट्त्रयेऽप्येवं तन्मध्ये मर्मयुक्तितः ।**

इत्यन्तः 'कादिमतो' एव चतुर्दशारान्तनिर्माणप्रकार उक्तः । तत्र 'प्रमृज्य तिर्य'गिति श्लोकेऽक्षराधिक्यं छान्दसमिति तट्टीकायां मनोरमायाम् । यदि कश्चिन्निपुणतरगणकाग्रणीर्भवेत् तदा कादिमत-प्रकारेण लिखितयन्त्रं मध्यतनवर्त्ति-त्रिचत्वारिंशत्त्रिकोणकोणानां क्षेत्रफल-गणनया यावदङ्गुलं प्रथमत्रिकोणं भवति तदङ्गुलप्रमाणमादौ धृत्वैव प्रथमत्रिकोणमारभेत् । तस्यास्तु मूलोक्तप्रकारः । स च यथा–

**'यदाशाभिमुखो मन्त्री चक्रराजं समुद्धरेत् । सैव पूर्वा दिगिति'**

न्यायेन स्वसम्मुखभागं पूर्व-दिक्त्वेन प्रकल्प्य तदादायैवेतरदिग्विभागो ज्ञेयः । ईशानादग्निपर्यन्तम् ऋजुरेखां समालिख्येशवह्न्यग्राभ्यां रेखाद्वयमाकृष्य वारुण्यामेकीकृते सति निष्पन्न-त्रिकोणोपरि द्वितीयं त्रिकोणं विलिख्य पूर्वत्रिकोणाग्रभागे मानयष्टिवद् वायु-राक्षसकोणगां रेखां कृत्वा तदग्राभ्यां रेखाद्वयं पूर्वकृत-त्रिकोणद्वय-सन्धिभेद-मर्मानुगुण्यक्रमेणाकृष्य पूर्वस्यां दिश्येकीकृत्याष्टारं कृत्वा तदीयप्राक्त्रिकोणेशानवह्निगतरेखाकोणाग्राभ्यां रेखाकोणौ संवर्द्ध्य तथैव पश्चिमत्रिकोणीय-वायु-राक्षसगत्त-रेखाकोणौ विस्तार्येशान-वह्नि-रेखाकोणाग्राभ्यां रेखे वायु-राक्षसगत-त्रिकोणाग्रस्पृष्टे आकृष्य पश्चिमायामेकीकृत्य वायु-राक्षस-रेखाकोणाग्राभ्यां रेखे ईशान-

वह्निगत-त्रिकोणस्पृष्टाग्रके आकृष्य पूर्वस्यां दिश्येकीकृत्य षट्कोणं कृत्वाऽष्टार-प्राक्त्रिकोणाग्रपश्चिमत्रिकोणाग्रयोर्मानयष्टिवद् रेखाद्वयं यथाक्रममीशान-वह्नि-वायु-राक्षस-पर्यन्तं कृत्वाऽष्टारीय-प्राक्त्रिकोण-प्रसूत-वायु-राक्षसत्रिकोणावधि रेखाद्वयाग्रभागौ संवर्द्ध्य पश्चिमत्रिकोणाग्रलिखितमान-यष्ट्यग्राभ्यां मर्मभेदक्रमेण संयोज्य तथैव सर्वप्रथमकृत-त्रिकोणप्राक्प्रसृत-रेखाद्वयनिष्पन्नेशान-वह्निगताष्टारीयत्रिकोण-द्वयाग्रभागौ मर्मानुगुणौ संवर्द्ध्य प्राक्त्रिकोणाग्रलिखित-मानयष्ट्यग्राभ्यां संयोज्य दशारं कृत्वा तदीय-प्राक्त्रिकोणीयेशान-वह्निगतरेखाकोणौ विस्तार्य तथैव पश्चिम-त्रिकोणीय-वायु-राक्षसगत-रेखाकोणौ संवर्द्ध्येशान-वह्नि-रेखा-कोणाग्राभ्यां रेखे वायुराक्षस-गत-त्रिकोणचतुष्टयाग्रस्पृष्ट आकृष्य पूर्वस्यामेकीकृत्य षट्कोणं कृत्वा पूर्वदशार-प्राक्पश्चिम-त्रिकोणाग्रयोर्मानयष्टिवद् रेखाद्वयं यथाक्रममीशान-वह्नि-वायु-राक्षसगतं कृत्वाऽष्टारीय-प्राक्त्रिकोणप्रसूत-षण्मर्मानुगुण-सूत्राग्रद्वयं पश्चिमतः संवर्द्ध्य पश्चिम-पूर्व-दशार-त्रिकोणाग्र-लिखित-मानयष्टिवल्लिखित-वायु-राक्षसगत-रेखाग्राभ्यां संयोज्य तथैव सर्वप्रथम-कृत-पश्चिमाग्रत्रिकोणप्रसूतषण्मर्मानुगुणसूत्राग्रद्वयं पूर्वतः संवर्द्ध्य पूर्वकृत-दशारीयप्राक्त्रिकोणाग्रलिखितेशान-वह्निगत-कोणाग्राभ्यां संयोज्य द्वितीयं दशारं कृत्वा, एतदीय-प्राक्-प्रत्यक्-त्रिकोणं विहाय पूर्वत ईशानगतं कोणं वह्निगतं कोणं च त्यक्त्वा तथैव पश्चिमतो वायुगतं कोणं राक्षसगतं कोणं च त्यक्त्वा, ईशान-वह्निगत-द्वितीयत्रिकोणाग्ररेखां संवर्द्ध्य तदग्राभ्यां रेखे वायु-राक्षसगत-त्यक्तत्रिकोणचतुष्टयाग्रस्पृष्टे आकृष्य पश्चिमायामेकी-कृत्य तथैव वायु-राक्षसगत-द्वितीयत्रिकोणाग्ररेखां संवर्द्ध्य तदग्राभ्यां रेखे ईशान-वह्निगत-त्यक्तत्रिकोणचतुष्टयाग्रस्पृष्टे आकृष्य पूर्वस्यामेकीकृत्य दशारप्राक्त्रिकोणाग्रे ईशान-वह्निगतां रेखां कृत्वा सर्वप्रथमकृतत्रिकोणप्राक्-प्रसृत-मर्माष्टकानुगुणवर्द्धित-रेखाद्वयाग्राभ्यां संयोज्य प्राक्लिखितदशार-प्राक्-त्रिकोणाग्ररेखानन्तरवर्त्तिनीं द्वितीयां रेखां संवर्द्ध्य दशारपश्चिम-त्रिकोणप्राक्प्रसृतमर्मचतुष्टयानुगुणवर्द्धित-रेखाद्वयाग्राभ्यां संयोज्य तथैव दशारपश्चिम-त्रिकोणाग्रे वायु-राक्षसगतां रेखां कृत्वाऽष्टारीयप्राक्त्रिकोण-प्रत्यक्-प्रसृतमर्माष्टकानुगुणवर्द्धितरेखाद्वयाग्राभ्यां संयोज्य प्राक्लिखित-दशार-पश्चिमत्रिकोणाग्ररेखानन्तरवर्त्तिनीं द्वितीयरेखां संवर्द्ध्य दशार-प्राक्त्रिकोण-प्रत्यक्प्रसृत-मर्मचतुष्टयानुगुणवर्द्धितरेखाद्वयाग्राभ्यां संयोजये-दिति चतुर्दशारान्तं कुर्यादिति । अत्र च—

**त्रिकोणरूपा योनिस्तु बिन्दुना बैन्दवं भवेत् ।**
**तथा चक्रत्रयमभूत् तत्र ततः शृणु वरानने ॥**

इति मूलोक्त्या बिन्दुलिखनं द्रष्टव्यम् । इयाँस्तु विशेषः । कादिमते– "चतुर्दशारवृत्तानन्तरं षड्भिरन्यैर्वृत्तैरष्टदल-षोडशदल-निर्माणम्" । तत्र चतुर्दशारवृत्तानन्तरमष्टदलमध्येष्वेकं वृत्तमष्टदलान्ते एकं षोडशदल-मध्येष्वेकं तदन्ते वृत्तत्रयमिति चतुर्दशारवृत्तेन सह सप्त वृत्तानि । भूगृहं तु प्रतिदिशं द्विरेखं वाम-दक्षिणशाखारेखाभिः सह प्रत्येकं रेखाचतुष्टयेन प्राक्-प्रत्यक्द्वाराद्वययुतं दक्षिणोत्तरतः प्रत्येकं रेखात्रयेण स्थानद्वययुतं विदिक्कोणेषु तिर्यक्सूत्रैर्द्विधाकृत-चतुष्पदयुतमिति । तदुक्तं **'कादिमते'**–

**बहिरष्ट-छदाम्भोजं तथा तद्द्विगुणच्छदम् ।**
**विधाय षड्भिर्वृत्तैश्च चतुरस्रं तथाष्टभिः ॥**
**सूत्रैर्विधाय तस्यैव प्राक्प्रत्यग्द्वारसंयुतम् ।**
**दक्षिणोत्तरतो रेखात्रयात् स्थानद्वयं तथा ॥**
**कोणेषु तिर्यक्सूत्रैश्च चतुर्भिस्तान्यनुक्रमात् ।**
**द्विधा कुर्याच्च चत्वारि पदानि परमेश्वरि ॥ इति ।**

अत्र चः 'भ्रमेण वृत्तं निष्पाद्य सुसमे चतुरस्रके' इत्यारभ्य 'मार्जयेन्म-ध्यगं ब्रह्मसूत्रं स्याच्चक्रमुत्तमम्' इत्यन्तेन प्राक्तन-ग्रन्थेनोक्तवृत्तसहित-चतुर्दशारान्तचक्रप्रतियोगिकं बहिष्ट्वं बहिःशब्दार्थमङ्गीकृत्य चतुर्दशार-वृत्तातिरिक्तानि षड्वृत्तानीत्यर्थाभिसन्धिना वृत्तानां व्यवस्था **'सौभाग्य-रत्नाकर'**कारोक्ता प्रदर्शिता । तट्टीकायां 'मनोरमा'-यां तु प्रोक्तचक्रगतबाह्य-वृत्राद् बहिरिति पूर्वग्रन्थेन व्याख्यातेऽपि बहिःशब्दार्थे षड्भिर्वृत्तैरित्यत्र चतुर्दशारवृत्तसहितान्येव षड्वृत्तानीत्यभिप्रेत्य चतुर्दशारवृत्तमेकं तत्-संलग्नमष्टदलकर्णिकावृत्तं ततोऽष्टदलोदरेषु केसरार्थं वृत्तमष्टदलाद्बहिः षोडशदलकर्णिकार्थं वृत्तम् । षोडशदलोदरेषु केसरार्थं वृत्तं षोडशदलान्ते परिवेशार्थं वृत्तमित्येवं वृत्तव्यवस्थोक्ता । वृत्तानां सन्निवेशस्योभयमतेऽपि साम्प्रदायिकत्वेन परिहर्त्तव्यत्वेऽपि बहिः शब्दार्थानुपपत्तेश्चिन्त्यैव शब्दार्थ-मर्यादाभिज्ञैरिति ।

**'ज्ञानार्णव'**-मते तु चतुर्दशाराष्टदल-षोडशदल-मर्यादाकरणवृत्तानि त्रीणि चतुरस्रं चैकरेखमिति भेदः ।

यद्यपि चतुर्दशारवृत्तानन्तरमष्टदल-षोडशदल-वृत्तद्वयं स्पष्टं मूलेन प्रतीयते, तथापि–

**एतद् बाह्ये महेशानि वृत्तं पूर्णेन्दुसन्निभम् ।**
**तद् युक्तं कुरु मीनाक्षि वसुपत्रं मनोहरम् ॥**
**ततः षोडशपत्रं तु विलिखेत् सुरवन्दिते ।**

इत्यनेन तेन वृत्तेन युतमष्टदलम्, तथा षोडशपत्रं तु पुनस्तद्युतं वृत्तयुतमित्यर्थेन वृत्तद्वयलाभः ।

**'तद् बाह्ये देवदेवेशि ! त्रिवृत्तं मातृकान्वितम्' ।**

इति श्लोक उपरि लिखितो मूलपुस्तके क्वचिद् दृश्यते; परन्तु अक्षरलिखनप्रकारस्य मूलकृता कस्मिंश्चिदपि चक्रेऽनभिधानादप्रस्तुतमातृकान्वित-त्रिवृत्ताभिधानस्यासङ्गतत्वप्रतीतेर्बहुषु पुस्तकेषु अनुपलब्धेश्च कल्पित एव प्रतीयते ।

कथं तर्हि—**"चतुरस्रं मातृकार्णैर्मण्डिते सिद्धिहेतवे"** इत्यप्रस्तुत-मातृकामण्डितत्वकथनमिति चेदुच्यते-

'चतुरस्रं चतुर्द्वारसहितं परमेश्वरी'ति षोडशदलानन्तरोद्धारश्लोके केवलचतुरस्रमात्रस्यैवोद्धारादनन्तरं 'चुतःषष्टिर्यतः कोट्यो योगिनीनां भवेत् प्रिये । मुक्तामाणिक्यघटित'मित्याद्यार्थवादप्राय-पठित-मातृकामण्डितत्व-विधानस्यार्थवादरूपत्वमौदुम्बराधिकरणन्यायेनैवापद्यते । अत एव चतुरस्रमित्येकवचनबलादेकमेव चतुरस्रं न तु त्रिरेखात्मकं चतुरस्रत्रयम् ।

अणिमादि-पूजाऽपि रेखा-निरपेक्षतया द्वारदक्षिणोत्तरतया द्वारदक्षिणोत्तरमध्यभागेष्वभिधास्यते मूलकृता ।

एवं च—

**बहिरष्टदलं पद्मं सुवृत्तेन समालिखेत्।**
**तद्वत् षोडशपत्रं हि विलिखेत् पद्ममुत्तमम् ॥**
**सुवृत्तं परमेशानि ततो भूबिम्बमालिखेत् ।**
**चतुर्द्वारविशोभाढ्यं पुष्पं तत्र विनिक्षिपेत् ॥**

इति संहितैकवाक्यताऽपि लभ्यते । अत एव पूजाप्रकरणे—

**'चतुरस्रे चतुर्द्वारि योगिन्यः सिद्धिदायिकाः'** । इति

मूले 'पश्चिमादि-क्रमेणैव प्रकटाश्चतुरस्रके' इति संहितायां चतुरस्रे इत्येकवचनान्तप्रयोगनिर्वाहो दृश्यते । यत्र तु मर्यादाकरणवृत्तद्वयापेक्षया षोडशदलानन्तरं वृत्तत्रयं भूचक्रगृहत्रयं चोक्तम्, यथा 'यामले'—

**बिन्दुत्रिकोण-वसुकोण-दशारयुग्मं**
**मन्वस्र-नागदलसङ्गत-षोडशारम् ।**
**वृत्तत्रयं सधरणी-सदनत्रयं च**
**श्रीयन्त्रराज उदितः परदेवतायाः ॥ इति ।**

न तत्र द्वाराणीत्यपि ज्ञेयम् । अत्र 'मन्वस्रनागदल-षोडशदलाभिधानादेव धरणीसदनत्रयमेव च विधीयते । अथवा यन्मर्यादावृत्तत्रयं तदेव वृत्तत्रयं चेत्यनेनोच्यते । तन्त्रान्तरेष्वन्येषु तदपेक्षया वृत्तत्रयान्तरादर्शनात् । तावताऽपि द्वारनिरपेक्षं भूसदनत्रयमेवेत्यत्र तु न सन्देहः । अत एव **'कल्पसूत्रे'**– "पीठमनुनाऽऽसन उपविष्टः पुरतः पञ्चशक्ति-चतुःश्रीकण्ठमेलनरूपं भूसदन-त्रय-भूपपत्र-दिक्पत्र-भुवनार-द्रुहिणार-विधिकोण-दिक्कोण-गुणकोण-बिन्दुमयं महाचक्रराजमिति मर्यादावृत्तातिरिक्तवृत्तानपेक्षं भू-सदनत्रय-मुक्तम् ।"

पूजाऽपि च तत्र–

अथ प्राथमिके चतुरस्रे 'अणिमे'त्यादिना द्वारनिरपेक्षैव चतुरस्रत्रयेऽभिहिता ।

गीर्वाणेन्द्रकृत **'प्रपञ्चसार-सार-सङ्ग्रहे'** पूजाक्रमेण चक्रन्यासकथन-प्रस्तावे 'शिङ्गभूपालीय-पद्धत्युक्तप्रकारेण लिख्यते' इत्यादि-ग्रन्थे 'प्रथम-चतुरस्ररेखायै नमो मध्यचतुरस्ररेखायै नमस्तृतीयचतुरस्ररेखायै नमः' इत्यारभ्य मुद्राब्राह्म्यणिमादीनां त्रिषु रेखासु पश्चिम-वायव्यादिदिक्-कल्पनया न्यासावृत्तद्वारकल्पना निरपेक्षा अभिहिताः । अत्रत्य एव वक्ष्य-माणे मानपुरःसरचक्रनिर्माणप्रकारेऽक्षरलेखनप्रकारे च स्पष्टमेव वृत्त-द्वार-निरपेक्षत्वं व्यक्तीकरिष्यते । **विद्यारण्यकृतावपि ( श्रीविद्यार्णवे )**–

**बिन्दु-त्रिकोण-काष्ठावतारयुग-लोकपत्रवृतम् ।**
**वसुदलवृत्त-कलादलवृत्त-त्रिमहीगृहं भजेच्चक्रम् ॥**

इति तथैव प्रतीयते । एतदभिप्रायिकैव 'वसुदल-कलाब्ज-त्रिवलयत्रिरेखाभिः सार्द्धमित्याचार्योक्तिः । तस्मात् **'ज्ञानार्णव'**मते मर्यादावृत्तसहितैकरेखात्मकं चतुर्द्वारयुतं चतुरस्रमिति सिद्धम् ।

**तद्बाह्यतोऽपि देवेशि! षोडशारं समालिखेत् ।**
**परिवेषं भूपुरं च चतुर्द्वार-सुशोभितम् ॥**

इति **'वामकेश्वर-तन्त्र'**मप्यस्मिन्नर्थेऽनुकूलम् । अतश्चतुर्दशारवृत्तानन्तरं चक्रभेदे सत्यपि न चतुर्दशारान्तयन्त्रभेदः 'कादिमत-ज्ञानार्णवयोरिति ।

यत्तु चतुर्दशारकोणाः सर्वे वृत्तस्पृष्टा ज्ञानार्णवमते, कादिमते तु षडेव कोणा वृत्तस्पृष्टा इति भेदं वदन्ति, तद् 'ज्ञानार्णवा'ज्ञानमूलम् । न हि 'ऋतुरेखं नेत्ररम्यं सन्धिभेदसमं ऋजु' तथा–'ऋजुरेखां समालिखेत्' तथा 'कक्षामध्यगता रेखा ऋजुरूपास्तु योजयेत्' इति मूलग्रन्थोपपादितं सन्धि-भेदमर्म्मानुगुणम् ऋजुत्वं चतुर्दशकोणानां वृत्तस्पृष्टत्वे सदाशिवेनापि रक्षितुं शक्यम् । किञ्च 'एतद्बाह्ये महेशानि वृत्तं पूर्णेन्दुसन्निभ'मिति चतुर्दशारानन्तरवृत्तस्य पूर्णेन्दुसाम्यं सुवर्तुलाकारत्वधर्मेणोच्यमानं न युज्येत, सर्वकोणस्पर्शे वक्राभावादिति । तदेवं **कादिमत-ज्ञानार्णवयामलमत-भेदेन यन्त्राणां त्रैविध्यमुपपादितम्** । अथ प्रसङ्गाद् **'विशुद्धेश्वर'**-तन्त्रीय-चक्रमपि प्रदर्श्यते । तत्रापि चतुर्दशारपर्यन्तं समानमेव ।

**तद्बाह्ये वृत्तमेकमष्टशक्तिदलान्वितम् ।**
**तद्बाह्ये वृत्तमेकं तु सीमार्थं साधकश्चरेत् ॥**
**पार्थिवं मण्डलं कुर्यात् त्रितयं द्वारसंयुतम् ।**
**द्वारद्वादशकं कुर्याच्चतुर्दिक्षु समाहितः ॥**
**पञ्चशक्तिश्चतुर्वह्निस्तद्विलासात्मकं समम् ।**
**ऋज्वाकृति यथा चक्रं तथा कुर्यात् समाहितः ॥**

इति स्पष्टमेव । सीमार्थं वृत्तमेकं त्वित्यनेन सीमा-करणवृत्तातिरिक्त-वृत्तानपेक्षमेव यन्त्रमुच्यते । त्रिषु महीगृहेषु चतुर्द्वारमेलने द्वादशद्वाराणि कुर्यादिति । तत्र निर्गमनगत्या पूजनमभिसन्धाय प्रथम-चतुरस्र-पश्चिम-द्वारादि-पश्चिमादि-दिक्षु विदिक्षु च संक्षोक्षणे मुद्राणाम्, मध्य-चतुरस्र-पश्चिमद्वारादि-पश्चिमादि दिक्षु विदिक्षु च ब्राह्म्यादीनाम्, तृतीय-चतुरस्र-पश्चिमद्वार-पश्चिमादिदिक्षु विदिक्षु चाणिमादिसिद्धीनां पूजाऽप्युक्ता । सोऽयं **चतुर्थो यन्त्रभेदः** ।

ननु शाखान्तरोपसंहारन्यायेनाग्नेयं चतुर्द्धा करोतीतिवत् 'चतुरस्रं चतुर्द्वारसहितं परमेश्वरी'त्यादि **'ज्ञानार्णव'-संहितादि**-वाक्यानां **'विशुद्धेश्वरीय-**वाक्यैरुपसंहारोऽस्तु, ततश्च सीमावृत्तातिरिक्त-वृत्तानपेक्षत्वेऽपि 'त्रिरेखं चतुर्द्वारयुतमेकमेव यन्त्रमस्त्विति चेत्, न, 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः' इति न्यायेनास्पष्टानां विशेषाकाङ्क्षिणामेवोपसंहारस्य मीमांसकैः स्वीकारात् । न ह्येकवचनान्तं **ज्ञानार्णवादि**-वाक्यं सन्दिग्धम्, येन विशेषा-पेक्षि भवेत् । चतुर्द्वारपदस्य द्वादशकपदघटितवाक्येनोपसंहारस्य केनापि वस्तुमशक्यत्वाच्च । अत एव 'सर्वतीर्थेष्वयं विधि'रिति सर्वशब्दबहुवचन-

घटितवाक्यस्य 'प्रयागे वपनं कुर्या'दित्यनेनोपसंहारो न स्वीकृतो निबन्धकारैः। अत उपसंहाराविषयत्वाद् ज्ञानार्णवविशुद्धेश्वरतन्त्रयोरस्त्येव यन्त्रभेद इति सिद्धिं यन्त्र-चातुर्विध्यम्।

एतेषूक्तयन्त्रभेदेषु चतुर्षु केसराणि निषिद्धानि। तदुक्तं 'तन्त्रसारे, भूतभैरवे'–

**योऽस्मिन् यन्त्रे महेशानि केसराणि प्रकल्पयेत्।**
**योगिनीसहितास्तस्य हिंसां कुर्वन्ति भैरवाः॥ इति।**

एवं स्थिते षोडशदलोत्तरवृत्तत्रयसहितं त्रिरेखात्मक-भूगृहात्मकं द्वादशद्वारयुक्तं यन्त्रमद्यावधि लिखन्ति तत् किं तन्त्रीयमित्यन्वेषणीयमेव तान्त्रिकैरिति दिक्।

**[ हस्तमात्र-यन्त्र-निर्मिति-प्रकारः ]**

अथेदानीं पूर्वोक्तयन्त्राङ्गुलप्रमाणान्तरालमानं **'कादिमत-टिप्पण-मनोरमा'**-ग्रन्थसूचितं हस्तमात्रे यन्त्रे त्वित्थम्–

पूर्वापरभागयोः षट् षडङ्गुलानि परित्यज्य मध्ये द्वादशाङ्गुले वृत्तसहितचतुर्दशारनिर्माणम्। पूर्वापरविभागयोरवशिष्टेषु षट्सु षट्सु अंशेषु मध्ये उभयतः किञ्चिल्लेशमात्राधिकसपादयवाधिकाङ्गुलद्वयमानेन वृत्तसहितमष्टदलम्। तेनैव मानेन वृत्तसहितं षोडशदलं च कार्यम्। तत्र पूर्वापरभागयोर्मिलित्वा किञ्चिदधिकपञ्चयवाधिकान्यष्टावङ्गुलानि जातानि। तत उभयतः किञ्चिदधिकसपादयवाधिकसार्द्धाङ्गुलमाने चतुरस्रम्। तत्र च सार्द्धयवद्वयाधिकाङ्गुलत्रयमाने जाते निरूपित-किञ्चित्-किञ्चिदधिकभागानां योजनया यवार्द्धमाने च लब्धे पूर्वोक्तानां पञ्चानां यवानां योजना लब्धयवाष्टकरूपाङ्गुलत्रयसम्मेलनेन निष्पन्नाङ्गुलचतुष्टयस्य पूर्वोक्तैरष्टभिरङ्गुलैर्योजने द्वादशाङ्गुलानि भवन्ति।

द्वाराणि मध्यतनब्रह्मसूत्रसम्बद्ध-चतुरस्रमध्याद् वाम-दक्षिणभागयोः किञ्चिदधिकसपादयवाधिकं सार्द्धाङ्गुलमानमुभयतश्चतुरस्ररेखामार्जनं कृत्वा कार्याणि। ततश्च द्वार-मध्यप्रदेशः किञ्चिदधिकसार्द्धयवद्वयाधिकाङ्गुलत्रयात्मको भवतीति। अन्यत्र तु चतुरस्ररेखामुभयतो भागद्वयं विहाय मध्यतनतृतीयांशप्रान्तद्वयावधि कार्याणीति सम्प्रदायः। एवमेव त्रिहस्तादियन्त्रवृद्धौ हस्तमात्रान्न्यूनयन्त्रेषु च त्रिगुणितादिमानवृद्ध्या हान्या च मानप्रकारोऽवधेयः। सोऽयं **'कादिमत'**सिद्धो मानप्रकारः।

ततोऽप्यतिसुलभतया गीर्वाणेन्द्रकृत-'प्रपञ्चसार-सारसङ्ग्रहे' प्रदर्शितः। कल्पान्तरोक्तोऽपि यन्त्रोद्धारप्रकारः प्रदर्श्यते। तत्र कल्पान्तरे मूलग्रन्थः। अथ–

पुरतो विहाय निजविष्टरादरत्निमवनिमथ समं मद्याधनत्रिकजाङ्गुलीयम्।
भवदेवभाग-वसु-तोय-पद्म-भू रचयामि चक्रमरुणं सुकेसरम्॥

देवी स्तुतो मे गङ्गावल्ली स्तुतेति प्रदर्श्यते।
मानं श्रीचक्रनिर्माणे सूत्रेषु नवसु क्रमात्।
आद्ये द्वितीयेऽष्टमके नवमे च यथाक्रमम्॥
मार्जयेद् गुणभागांशान् वृत्तादेकत्र चान्यतः।
चतुर्थषष्ठयोः पार्श्वे तोयांशं परिमार्जयेत्॥
पञ्चमस्य जयाशं च मार्जयेच्चान्यपार्श्वतः।
तृतीयान्ताद् द्वितीयान्ताच्चतुर्थान्ताच्च पञ्चमात्॥
प्रथमान्तात् सूत्रयुगं वृत्ततो नवमादिकम्।
सप्तमाष्टमयोरन्तात् तथा षष्ठ-नवान्तयोः॥
वृत्तादि-सूत्रयुगलं क्रमात् सूत्रद्वयं द्विधम्।
हर्म्य-वर्म्य-समोपेतं भद्र-सन्धि-समन्वितम्॥
यच्चक्रं ललितायास्तन्मङ्गलं नेतरद् भवेत्।
ललिताचक्रनिर्माणे सङ्केतश्लोकषट्कवित्॥
काश्मीर-सम्प्रदायी स्यात् पारम्पर्य-क्रमान्वितः।
पञ्चशक्ति-चतुर्वह्निरुद्विलासात्मकं समम्॥
कृत्यं पञ्चविधं शश्वद् भासते तन्नुमः शिवम्॥ इति।

अस्यार्थः–

अथासनोपवेशनानन्तरं पुरतः पूर्वभागे निजविष्टरान्निजासनादरत्निं हस्तमात्रावनिं भूमिं विहायाथानन्तरं यावदपेक्षितमानं समं समानं चतुरस्रं कर्तव्यम्। तत्र मध्यं प्रसाध्य तत्प्रमाणेन ब्रह्मसूत्रं दत्त्वा तद्ब्रह्मसूत्रं त्रिकं कर्तव्यम्। त्रिकं नामारत्नित्रयम्। यन्मानं ब्रह्मसूत्रं कृतं भवति, तद् द्व्यधिकसप्तत्यङ्के कृतेऽरत्नित्रयाख्यं भवति। तद् ब्रह्मसूत्रं द्विसप्तत्यंशेन विभजनीयमिति यावत्। तेषु द्विसप्तत्यंशेषु पूर्वभागे सार्द्धत्रयोदशांशान-परभागे च सार्द्धत्रयोदशांशान् सन्त्यज्य पूर्वभागेऽपरभागे च विद्यमान-योर्मध्यतनसार्द्धद्वाविंशत्यंशयोरुपरि यथा वृत्तं पतति, तथा भ्रमेण वृत्तं कृत्वा तद्वृत्तसहिता मध्यतनांशाः कटपयादिसङ्केतप्रकारेण मध्य इत्युक्त-

पञ्चचत्वारिंशत्संख्याकाः पृथक्-पृथक् विस्तारायामौ मिलित्वा भवन्ति । तदेवं वृत्तसहितचतुर्दशारपर्यन्तं मानमुक्तम् । एवं चक्रमध्यं कृत्वा तद् बहिरष्टदलं पूर्वभागेऽपरभागे च पृथक्-पृथक् सार्द्धांशचतुष्टयं मिलित्वाध इत्युक्त-नवांशपरिमाणं भवति । तद्बहिः षोडशदलपद्मं पूर्वभागेऽपरभागे पृथक्-पृथगंशपञ्चकं मिलित्वा न इत्युक्त दशांशमानं भवति । तद् बहिश्चतुरस्रत्रयं पूर्वभागेऽपरभागे च पृथक्-पृथगंशचतुष्टयं मिलित्वाऽष्टांश-मानं भवति । एवं ब्रह्मचक्रस्य सम्भूय सप्तविंशत्यंशमानं भवति । तदेतन्मधाधनजाङ्गुलीयमित्यनेनोक्तम् । अङ्गुलिशब्दश्चांशपरः ।

इत्थं सम्पन्ने चक्रे चतुर्दशारान्तरं मानं नव इत्युक्तपञ्चचत्वारिंशदंशं भवति । तदेतत्पञ्चचत्वारिंशदंशमानं देवभाग इत्युक्ताष्टाचत्वारिंशद्-भागरूपेण विभजनीयम् ।

तद् बहिर्वसु इत्युक्ताष्टसङ्ख्यदलं पद्मम् । तद् बहिस्तोय इत्युक्त-षोडशसङ्ख्यदलपद्मम् । 'भू' इत्युक्त्या तद्बहिश्चतुरस्रत्रयं लेख्यम् । एवं श्रीचक्रं सुकेसरं शोभनकेसरसहितमरुणं सिन्दूरवर्णं च रचयामीति बाह्यचक्रलेखनप्रकार उक्तः ।

अथ चतुर्दशारपर्यन्त-चक्रलिखनप्रकारः कटपयादिसङ्केतेन नवरेखा-लिखनप्रकारः प्रदर्श्यते—'देवीस्तुत' इत्यनेन । अस्यार्थः—तत्र देवीत्युक्त्या पूर्वगृहीताष्टाचत्वारिंशदंशा अपि पृथक्-पृथग् वृत्तमारभ्य तत्तद् वक्ष्य-माणरेखांशेन विभजनीया इत्युक्तं भवति । तत्र स्वाग्रतो वृत्तमारभ्य 'स्तु' इत्युक्ते षड्भागे एका रेखा तिर्यक्, तदुपरि 'ता' इत्युक्ते षड्भागे द्वितीया तिर्यग् रेखा । तदुपरि 'मे' इत्युक्ते पञ्च-भागे तृतीया तिर्यग् रेखा । तदुपरि 'गं' इत्युक्ते त्रिभागे चतुर्थतिर्यग् रेखा । तदुपरि 'गावी' इत्युक्तत्रिभागे पञ्चमी तिर्यग् रेखा । तदुपरि 'व' इत्युक्तचतुर्भागे षष्ठी तिर्यग् रेखा । तदुपरि 'ली'त्युक्तत्रिभागे सप्तमी तिर्यग् रेखा । तदुपरि 'स्तू' इत्युक्तषड्भागेऽष्टमी तिर्यग् रेखा । तदुपरि 'ते' इत्युक्तषड्भागे नवमी तिर्यग् रेखा । तदुपरि 'ती'त्युक्तषड्भागे वृत्तमर्यादैव । इति वृत्तपर्यन्तं श्रीचक्रनिर्माणेन वसुरेखासु क्रमेण मानं प्रदर्श्यते ।

अतः परं लिखनविपरीतक्रमेण प्रथम-द्वितीय-तृतीयादिविभागो नव-रेखासु द्रष्टव्यः ।

**अथ रेखासु मार्जनप्रकारः –**

'आद्ये द्वितीयेऽष्टमके' इत्यनेन प्रदर्श्यते। तत्राद्यद्वितीययोरष्टम-नवम-सूत्रयोर्वृत्तादुभयपार्श्वतोऽपि क-ट-प-यादि-सङ्केतप्रकारेण गुणभाग इत्युक्त-संख्यया मार्जनं कर्त्तव्यम्। तत्र 'गु' इत्युक्त्यां प्रथमसूत्रोभयपार्श्वेऽपि पृथक्पृथगंशपञ्चकं सम्भूयांशदशकं मार्जयेत्। द्वितीयसूत्रमानं सुदिनम्। 'भा' इत्युक्त्याऽष्टमसूत्रोभयपार्श्वेऽपि पृथक्पृथगंशचतुष्टयं सम्भूयांशाष्टकं मार्जयेत्। 'भा' इत्युक्त्या नवमसूत्रोभयपार्श्वेऽपि पृथक्-पृथगंशत्रयं सम्भूयांशषट्कं मार्जयेत्। तथा चतुर्थ-षष्ठ-सूत्रोभयपार्श्वेऽपि पृथक्-पृथक्-तोयांश इत्युक्त-षोडशांशं सम्भूय द्वात्रिंशदंशं मार्जयेत्। तथाकृते सूत्रद्वय-स्यापि सम्भूय चतुःषष्ट्यंशं मार्जितं भवति। तथा पञ्चमसूत्रस्योभय-पार्श्वेऽपि पृथक्पृथगष्टादशांशेन सम्भूय षट्त्रिंशदंशं मार्जयेत्। तृतीय-सप्तमसूत्रयोरंशमार्जनं नास्ति, अनुक्तत्वात्। अत्र च मार्जनीयांशा मध्य-सूत्रीयाष्टाचत्वारिंशदंशविभागेन ज्ञेया इति गुरुसङ्केतः।

अथ नवरेखासंसर्गप्रकारस्तृतीयान्ताद् द्वितीयान्तादित्यनेन प्रदर्श्यते– तृतीयरेखापार्श्वद्वयमपि स्वाग्रतो वृत्तसम्बन्धि-ब्रह्मसूत्रभागेन सह त्रिकोणा-कारेण योजनीयम्। सोऽयं स्वाग्रतो विद्यमानो वृत्तभाग उपरितनवृत्त-शब्देनोच्यते तस्मिन् ग्रन्थे। तथा द्वितीयरेखापार्श्वद्वयमपि नवमसूत्रमध्ये त्रिकोणाकाररूपेण योजनीयम्। तथा चतुर्थसूत्रपार्श्वद्वयमपि अष्टमसूत्र-मध्ये त्रिकोणाकाररूपेण योजनीयम्। तथा पञ्चमसूत्रपार्श्वद्वयमपि सप्तम-सूत्रमध्ये त्रिकोणाकाररूपेण योजनीयम्। तथा प्रथमसूत्रपार्श्वद्वयमपि षष्ठसूत्रमध्ये त्रिकोणाकारेण योजनीयम्। प्रथमान्तात् सूत्रयुगं वृत्ततो नवमादिति। तृतीयान्त-द्वितीयान्त-चतुर्थान्त-पञ्चमान्त-प्रथमान्तानारभ्य सूत्रयुगं नवमाष्टम-सप्तम-षष्ठसूत्रमध्येषु योजयेदित्यर्थः। तदेकं पञ्च-योन्यात्मकं शक्तिचक्रम्। तथा सप्तमसूत्रपार्श्वद्वयमपि वृत्तपरभागसम्बन्धि ब्रह्मसूत्राग्रमध्ये त्रिकोणाकारेण योजनीयम्। सोऽयं परतो विद्यमानो वृत्तभागोऽधोभागवृत्तमध्य इत्यनेन व्यवहृतस्तस्मिन् ग्रन्थे।

तथाऽष्टमसूत्रपार्श्वद्वयमपि प्रथमसूत्रमध्ये त्रिकोणाकारेण योजनीयम्। तथा षष्ठसूत्रपार्श्वद्वयमपि द्वितीयसूत्रमध्ये त्रिकोणाकारेण योजनीयम्। तथा नवमसूत्रपार्श्वद्वयमपि तृतीयसूत्रमध्ये त्रिकोणाकारेण योजनीयम्। एतच्चतुष्टयं शिवचक्रं वह्निचक्रमित्यपि चोच्यते। वृत्तादिसूत्रयुगलमिति।

अधोवृत्तं उपरिवृत्तं चारभ्य सर्वाभ्च रेखा उभाभ्यां पार्श्वाभ्यां त्रिकोणाकारेण तत्तदुक्तरेखामध्ये योजनीया इत्यर्थः।

**हर्म्य-वर्मेति** । रेखात्रयसंयोगे वर्म । रेखाद्वयसंयोगे सन्धिः । तत्र कटपयादि-सङ्केतेन हर्म्येत्यष्टादशसङ्ख्योच्यते । भद्रेति चतुर्विंशतिसङ्ख्योच्यते । तथा च यथाऽष्टादशवर्माणि चतुर्विंशतिसन्धयश्च भवन्ति, तथा लेखनीयम् । इति यच्चक्रं तन्मङ्गलकारि नेतरदिति भावः । तत्रैतत्कल्पकारमतेऽपि मर्यादावृत्तातिरिक्तवृत्तानि न सन्तीति ज्ञेयम् । द्वाराणां स्वरूपतो मानतश्चानभिधानादेवाभावः ।

अत्र यत् षोडशदलोत्तरं पूर्वभागेऽपरभागे च चतुरंशप्रमाणं भूगृहत्रयमुक्तं तत्र षोडशदलोत्तरमंशद्वयं चेत्युक्त्वा एकैकांशान्तरे रेखात्रयं देयमिति ज्ञेयम् । कटपयादिसङ्केतस्तु कादि-नवटादि-नवपादि-पञ्चयाद्यष्टावित्येवं वररुचिकृतो द्रष्टव्यः । एवं यन्त्रलिखनप्रकारो द्विविध उपपादितः । सोऽयं केसरसहितो यन्त्रभेदः पञ्चमः ।

सौभाग्यरत्नाकरकृता त्वभिषेकप्रकरणे षोडशदलपर्यन्तं तन्त्रराजीयमेवोक्त्वा चतुरस्रत्रयसहित-चतुर्द्वारात्मकं तदुपरि यन्त्रमुक्तम्, तत् कुतस्त्यमिति न ज्ञायते । यद्यस्ति तन्त्रान्तरसिद्धता तस्य तर्ह्यस्तु, सोऽपि यन्त्रभेदः षष्ठः ।

**[ श्रीचक्रेऽक्षर-लिखन-प्रकारः ]**

अथेदानीं **द्रविड-सम्प्रदायसिद्धः** श्रीचक्रेऽक्षरलिखनप्रकारस्तत्प्रदर्शित एव निरूप्यते । तत्र प्रथमत्रिकोणमध्यस्थबिन्दुमध्ये लेखनीयाक्षरोद्धारश्लोकः—

**"कमलं परिलुप्य मध्यमान्यत्-स्वंरमीशादियुतं सबिन्दुनादम् ।**
**निगमादि-नमोऽन्तरे विराजद् भुवि देवीहृदयं प्रतिष्ठमेतत् ॥"**

अस्यार्थः—'**कमलं परिलुप्येति**' । मूलविद्याया द्वितीयखण्डस्य कामकलाखण्डत्वात् कामबीजात्मकं क्लीङ्कारं सिद्धवत्कृत्य तस्य ककार-मकारलकाराक्षराणि लोपयित्वा मध्यमन्यत्-स्वरमिति, तन्मध्ये पुनरवशिष्टो यश्चतुर्थस्वर ईकारः, स पुनरीशादियुतमिति । तद्बीजं पुनरीशानः सर्वविद्यानामित्यस्य मन्त्रस्यादिभूतो यो वर्ण ईकारस्तेनैतद् बीजं पूर्वोक्तमिति । पूर्वोक्तस्य बीजस्यादौ संयोजयेदित्यर्थः । तथा सबिन्दुनादम् । एतद् बीजद्वयं बिन्दुनादसहितं कार्यमित्यर्थः । पुनर्निगमादिनमोऽन्तरे विराजदिति । निगमादिः प्रणवः । नम इति स्वरूपोपादानम् । अस्य बीजस्यादौ प्रणवः । अन्ते नमःपदं चेत्यर्थः ।

भुवि देवीहृदयप्रतिष्ठमेतदिति । भुवि भू-सत्तायामिति सद्भावकारणे योनौ श्रीचक्रमध्यत्रिकोण इत्यर्थः । तत्र देवीति त्रिकोणमध्यस्थं बिन्दुम्, तस्य हृदयं तन्मध्य इत्यर्थः । प्रतिष्ठमेतदिति । एतद्बीजत्रयं तत्र स्थितं कुर्यात्। बिन्दुमध्ये एतन्मन्त्रे लिखेदित्यर्थः। मन्त्रस्वरूपं च–'ॐ ईं ईं नमः' इति पञ्चवर्णात्मकम् । पुनस्त्रिकोणकोणेषु मूलविद्याखण्डत्रयं वामावर्तेन ।

प्रागादिकोणेषु पुनरष्टकोणेषु स्वाग्रतो विलोमेन वशिन्यादिबीजाष्टकम् । प्रथमदशारे पश्चिमादि-वामावर्त्तेन यादयः क्षान्ताः सबिन्दुकाः । द्वितीय-दशारे पश्चिमादि-वामावर्त्तेन क-चवर्गयोर्वर्णाः सबिन्दुकाः । मन्वस्रे पश्चिमादि-वामावर्त्तेन तृतीयवर्गादि-पञ्चमवर्ग-चतुर्थाक्षरान्ता वर्णाः । अष्टदलेषु प्रागादिचतुर्दिक्षु कादिवर्गचतुष्टयम् । आग्नेयादि-विदिक्षु यादिचतुष्टयम् । षोडशारे सबिन्दुकान् षोडश स्वरान् पश्चिमादि-वामावर्त्तेन लिखेत् । प्रथमचतुरस्रे पश्चिमादि-चतुर्दिक्षु 'द्रां द्रीं क्लीं ब्लू'मिति । वायव्यादिकोणेषु 'सः क्रों हस्ख्फ्रें हसौः' इति लिखेत् । ऊर्ध्वाधः 'ऐं ऐं'मिति बीजद्वयम् । द्वितीयचतुरस्रेऽष्टदिक्षु दीर्घस्वरा अष्ट । तृतीयचतुरस्रे पश्चिमादि-चतुर्दिक्षु अणिमादि-सिद्धि-चतुष्टयाद्याक्षराणि । ऊर्ध्वाधः प्राप्ति-प्राकाम्यसिद्ध्योराद्यमक्षरं लिखेत् । ततो बिन्दुप्राग्भावे 'ह्स्क्ल्र्डैं ह्स्क्ल्रडीं ह्स्क्ल्र्डौः' इति विलिख्य तत्तदावरणपुरतश्च तत्तच्चक्रेशीमन्त्रान् लिखेदिति सोऽयमक्षरसहितः सप्तमो यन्त्रभेदः ।

तदेवं निरूपितेषु यन्त्रभेदेषु सर्वेष्वपि मर्म-सन्धिभेदोऽतिसंरक्षणीय-स्तदुक्तं 'तन्त्रराजे'–

षड्रेखासन्धिमर्माख्यं सन्ध्याख्यं द्वयसङ्गमात् ।
तच्चतुर्विंशतियुतं चक्रं सर्वार्थसिद्धिदम् ॥
अन्यथा भिन्नमर्मादियुत-चक्रसमर्चनात् ।
शस्त्राद् वधं महाव्याधिं दारिद्र्यमयशो मृतिम् ॥
तस्माल्लक्षणसंयुक्तमुक्तरूपं विधाय वै ।
चक्रं तत्रैव तां नित्यमर्चयन् मत्समो भवेत् ॥ इति ।

अत्रेदमाकूतम्-

'श्रीचक्रमपि देवेशि मेरु-रूपं न संशयः ।'

तथा–

एतच्चक्रं मेरुरूपश्रीविद्यार्णैः समुद्धृतम्' ॥

इत्यादिमूलग्रन्थदर्शनाद् यद्यपि एकस्योपरि एकैकं चक्रमित्येवं मेरुरूपमेव चक्रं प्रतीयते, तथापि नानेन प्रकारेण मेरुरूपत्वं ज्ञेयम् । यथा मेरुः वक्ष्यमाणसकलसुन्दरीमन्त्राधारभूतानि सर्वमन्त्रेष्वनुगतानीत्येवं सादृश्यप्राप्तमेरुभावापन्न-नवाक्षररूपाणि नव-चक्राणीत्येतावन्मात्रस्य विवक्षितत्वात् ।

अत एव–

'एतच्चक्रं मेरु-रूप-श्रीविद्यार्णैः समुद्धृत'मित्यत्र मेरुरूपमिति बिन्द्वन्तः पाठो बहुषु पुस्तकेषु नोपलभ्यत इति श्रीविद्याक्षरगतमेव मेरुत्वं गम्यते । तथाविधाक्षरसादृश्योपपत्तिकमेव च लकारः पृथिवीबीजं तेन भूबिम्बमुच्यत इत्यादिना मूले मेरुत्वं वर्णितम्; किन्तु–

**भू-प्रदेशे समे शुद्धे सिन्दूर-रजसाऽथवा ।**
**कुङ्कुमस्य रजोभिश्च भूमौ चक्रं समालिखेत् ॥**

इति ग्रन्थान्मेरुरूपत्वं ध्वन्यते । अत्र च भूमौ भू-प्रदेश इति पदद्वयं व्यर्थं सदसमे इति पदच्छेदेन विषमे एकस्योपरि एकैकमित्येवंरूपे भू-प्रदेशे सिन्दूररजसा चक्रं लिखेदिति गमयति । एकैकचक्राकारं भूप्रदेशं सम्पाद्य तत्र तत्र सिन्दूररजःपूरणं कर्त्तव्यमिति भावः । तत्र च समसन्धिभेदमर्मानुगुणता च गुरु-सम्प्रदाय-सङ्केतेन ज्ञेया ।

अत एव मुक्ता-माणिक्य-घटितं समस्थलविराजितमिति मूलकृता चतुरस्रे समस्थलविराजितमिति विशेषणेन–

**भूपुरं तु समारभ्य बैन्दवान्तं महेश्वरि ।**
**क्रमात् समुन्नतं सर्वं मेरुपृष्ठं मयोदितम् ॥**

इति गौरीयामलोदित-मेरुपृष्ठलक्षणेनेतरेषामसमस्थलवृत्तित्वं स्पष्टीकृतम्, तस्मान्मूले भूप्रस्तारो मेरुप्रस्तारश्चेति प्रस्तारद्वयं दर्शितमिति सिद्धेऽर्थे यदा समानभूमौ समं यन्त्रं तदा कुङ्कुमरजोभिः पूरणम् । यदा पूर्वोक्त-विषमे भूप्रदेशे, तदा सिन्दूररजोभिः पूरणम् । यदा तु ताम्रादिरचिते समाने विषमे वा पट्टे, तदा गोरोचना-कुङ्कुम-कस्तूरी-चन्दन-कर्पूरद्रव्यैर्हेमतारया लेखिन्या लिखनमिति विवेकः । यद्यपि –

**प्रकृतित एव यन्त्रं हेम-रूप्यादि-पट्टके ।**
**ताम्रे वा दर्पणे स्थाले काश्मीरप्रभवेऽपि च ॥**
**चर्चापीठे तथा भूमौ कुङ्कुमागरुचन्दनैः ।**
**सिन्दूर-रजसा वापि कस्तूरी-घुसृणेन्दुभिः ॥**

**भूर्जे गोरोचनाद्रव्यैः कल्पितं मानसेऽथवा ।**
**सुवर्ण-रत्नलेखिन्या ..........................॥**

इत्यनेन विहित-ताम्रादि-पीठादि-पदार्थानां प्राप्तत्वात्—

**अथवा हेम-रूप्याभ्यां ताम्रेण रत्नधातुभिः ।**
**पट्टं विरच्य श्रीखण्ड-रक्तचन्दन-सम्भवे ॥**
**पट्टे संस्थाप्य विलिखेल्लेखिन्या हेमतारया ।**
**रोचना-कुङ्कुमाभ्यां च कस्तूरी-चन्दनेन्दुभिः ॥**

इति वचनानि व्यर्थानीति भान्ति, तत्रायं परिहारः । अथवा हेमरूप्याभ्यामित्यनेन प्रकृतिप्राप्तं पट्टमनूद्य श्रीखण्ड-रक्तचन्दन-निर्मित-पट्टाधिकरणत्वं विधीयते, प्रकृतिप्राप्तां च सुवर्ण-रत्न-लेखनीं बाधितुं हेमतारलेखनी विधीयते । गोरोचनादि-द्रव्याणि समुच्चितानि विधातुं रोचना-कुङ्कुमेति वाक्यमिति सर्वं सुस्थं ज्ञेयम् ।

अत्र भूगृहमारभ्य बिन्दुचक्रान्तानां क्रमेण त्रैलोक्य-मोहन-सर्वाशापूरक-सर्वसंक्षोभण-सर्वसौभाग्यदायक-सर्वार्थसाधक-सर्वरक्षाकर-सर्वरोगहर-सर्वसिद्धिप्रद-सर्वानन्दमयेतिसंज्ञाः । तत्र भूगृह-षोडशदलाष्टदलचक्राणां सृष्टिचक्रमित्याख्या । चतुर्दशार-दशारद्वययोः स्थितिचक्रमित्याख्या । अष्टार-त्रिकोण-बिन्दूनां संहारचक्रमित्याख्या । तत्प्रयोजनं तु पूजावसरे दर्शयिष्यते । संहारचक्रस्य मध्यचक्रं स्थितिचक्रस्य तु बाह्यमध्यगत-मित्याख्योक्ता मूले ।

यत् तु मूले षडध्वप्रतिपादनमस्मिँश्चक्रे कृतं तन्नातीवपूजोपयोगीति न विस्तार्यते । अत्र प्रागादि दिग्-व्यवहारो न प्रसिद्धप्राचीमादाय, न वा पूज्य-पूजकयोरन्तरालं प्राचीमादायेति कथयितुम्—

**'यदाशाभिमुखं चक्रं स्थाप्यते सन्मुखादिकम्'**

प्राचीति । **'उत्तराशामुखो देवि! यदा चक्रं समुद्धरेत्'** ॥

इत्यादि ग्रन्थेनोक्तम् । स्पष्टमेवैतद्वचनसमानार्थकं 'गुप्तार्णव'-वचनम् ।

**यदाशाभिमुखो मन्त्री त्रिपुरां परिपूजयेत् ।**
**देवीपश्चात्तनः प्राची प्रतीची त्रिपुरापुरः ॥ इति ।**

स्थापनं तु—

**'सन्मुखं पञ्चशक्त्यग्रं प्राग् वक्त्रं चतुरग्निकम्'**

इत्यनेनोक्तम्। यदा तु नित्यमेवं यन्त्रलिखनेऽसमर्थस्य प्रयोग-प्रांशुभावो गच्छेदित्यतस्ताम्रादिरचिते पट्टे ऊर्ध्वरेखाभिर्मेर्वाकारेण वा यन्त्रं मूलानुक्तमपि–

'रत्नादिषु तु निर्माणे मानमिच्छावशाद् भवेत्।'

इति कादिमतोक्तप्रकारेण तन्त्रान्तरसिद्धं निर्माय तदुपरि पूजां यश्चिकीर्षति, तेन यन्त्र-संस्कारविधिना यन्त्र-प्रतिष्ठां कृत्वा तत्र पूजा कार्या। ताम्रादि-निर्माण-पट्टप्रमाणं तु 'रत्नसारे'–

**पल-प्रमाणं कर्तव्यमर्चापीठं मनोहरम्।**
**यवार्द्धोच्चं प्रकुर्वीत चतुरस्रं समन्ततः॥**
**यस्मिन् पीठे च निर्माणं श्रीचक्रस्य तु कारयेत्॥**

तथा **'सौत्रामणी-तन्त्रे'**–

**अग्न्यङ्गुलेन विस्तारं यवार्द्धेनोच्छ्रितिर्भवेत्। इति।**

पलं चत्वारिंशन्माषाः।

**[ श्रीयन्त्र-प्रतिष्ठाप्रकारः ]**

**यन्त्र-प्रतिष्ठाविधिर्यथा–**

तत्र शुभे चन्द्रताराऽनुकूले दिवसे कृताह्निको गणेश-पूजन-स्वस्ति-वाचनादि कृत्वा 'ॐ अद्येत्यादि० अमुकगोत्रोऽमुकशर्मा श्रीमहात्रिपुरसुन्दर्याः पूजार्थं श्रीचक्रराज-संस्कारमहं करिष्ये' इति सङ्कल्प्य पञ्चगव्यमानीय 'ह्रौं' इति मन्त्रेणाष्टोत्तरशतमभिमन्त्र्य प्रणवेन तत्र यन्त्रं निक्षिप्य तत उत्तोल्य पात्रान्तरे स्थापयेत्। ततः पञ्चामृतेन संस्नाप्य धूपं दद्यात्। ततः शीतल-जल-कुङ्कुम-कस्तूरीभिः स्नापयित्वा धूपं दद्यात्। ततस्तथैव दुग्धेन दध्ना घृतेन मधुना शर्करया प्रत्येकं क्रमेण संस्नाप्य प्रत्येकं धूपं दत्त्वा पुनः पञ्चामृतेन संस्नाप्याष्टभिः कलशैः कुङ्कुम-गोरोचना-चन्दनमिश्रितैस्तोयैः स्नापयेत्। अत्र सर्वत्र स्नानं मूलमन्त्रेण। एवं स्नानं समाप्य पात्रान्तरे संस्थाप्य कुशाग्रेण यन्त्रं स्पृष्ट्वा–

"ॐ यन्त्रराजाय विद्महे महायन्त्राय धीमहि तन्नो यन्त्रं प्रचोदयात्'

इति यन्त्रगायत्रीमष्टोत्तरशतं जप्त्वा भूतशुद्ध्यादिना आत्मशुद्धिं कृत्वा यन्त्रं स्पृष्ट्वा–

'अस्य प्राणप्रतिष्ठामन्त्रस्य ब्रह्म-विष्णु-महेश्वरा ऋषयः, ऋग्यजुःसामानि छन्दांसि चैतन्यं देवता प्राणप्रतिष्ठायां विनियोगः। (इति विनियुज्य )–

"आं ह्रीं क्रों यं रं लं वं शं षं सं हों हंसः अमुकयन्त्रस्य प्राणा इह प्राणाः । आं ह्रीं क्रों १०, अ॰ जीव इह स्थितः । आं. १२ अ॰ सर्वेन्द्रियाणि । आं. १२ अस्य वाङ्मनश्चक्षुः-श्रोत्र-घ्राण-प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा" ।

इति प्राणान् प्रतिष्ठाप्य देवीमावाह्य षोडशोपचारैः सम्पूज्य षडङ्गं कृत्वा पट्टसूत्र-वस्त्रालङ्कार-मुकुर-चामरादि दत्त्वाऽष्टोत्तरसहस्रं जप्त्वा सव्यञ्जनान्नेन बलिं दत्त्वा मूलेनाष्टोत्तरशताहुतीर्हुत्वा सम्पाताज्यं निक्षिप्य गुरवे स्वर्ण-शृङ्गालङ्कृतां धेनुं दत्त्वा देवीं विसृज्य कुमारी-योगिनी-ब्राह्मणान् सम्भोज्य सुखी विहरेत् ।

सोऽयं यन्त्र-प्रतिष्ठाविधिस्तन्त्रसारे वामकेश्वरतन्त्रीयत्वेनोक्तः । संक्षिप्त-त्वादत्र लिखितः ।

अथैतादृश-श्रीचक्रनाशे प्रायश्चित्तम्—

दग्धं च स्फुटितं नष्टं हृतं चौरेण वा प्रिये ।
उवपासं प्रकुर्वीत दिनमेकमतन्द्रितः ॥
लक्षमात्रं[1] जपेद् विद्यां होम-तर्पण-पूर्विकाम् ।
सद्भक्त्या च गुरुं तोष्य ब्राह्मणानभिभोजयेत् ॥
कदाचिल्लुप्तचिह्नं च स्फुटितादि-विदूषणम् ।
भग्नं करोति यो मर्त्यो मृत्युस्तस्य द्रुतं भवेत् ॥
तस्माच्च तीर्थराजे वा गङ्गादि-सरितांवरे ।
समुद्रे वा क्षिपेद् देवि चान्यथा दुःखमाप्नुयात् ॥

अथ श्रीचक्र-पादोदक-माहात्म्यम् –

गङ्गा-पुष्कर-नर्मदादि-यमुना-गोदावरी-गोमती-
गङ्गाद्वार-गया-प्रयाग-बदरी-वाराणसी-सिन्धुषु ।
रेवासेतु-सरस्वती-प्रभृतिषु ब्रह्माण्डभाण्डोदरे
तीर्थस्नान-सहस्रकोटि-फलदं श्रीचक्रपादोदकम् ॥ १॥

अथ दर्शन-फलम्—

सम्यक् शतक्रतून् कृत्वा यत्फलं समवाप्नुयात् ।
तत्फलं लभते कृत्वा भक्त्या श्रीचक्रदर्शनम् ॥ इति ॥

1. लक्षमयुतमित्येके ।

ताम्रादियन्त्राणां पूज्यताकालावधिरुक्तो 'रत्नसारे'–

**यावज्जीवं सुवर्णे स्याद् रूप्ये द्वाविंशतिः प्रिये ।**
**ताम्रे द्वादशकं वर्षं तदर्द्धं भूर्जपत्रके ॥**

'सार-सङ्ग्रहे'–

**ताम्रे द्वादशकं वर्षं स्फाटिकादौ च सर्वदा ।**
**तेषां मध्ये स्फाटिकं तु सर्वसिद्धिप्रदं भवेत् ॥ इति ॥**

इदमपरमत्र रहस्यम्–

सुन्दरी-समान-ध्यान-पुरुषविग्रहः कामेश्वर एव सर्वानन्दमयं चक्रम्, तस्य हि कामेश्वराकारतां परित्यज्य यद् बिन्दुरूपेण लिखनं तत्तस्य 'नेति नेती'ति श्रुति-प्रतिपादित-सकल-प्रपञ्च-निषेधात्मक-साक्षिरूप-शून्यता-ज्ञापनद्वारा तच्छक्तेः सुन्दर्याः कामेश्वरीविग्रहायास्तदुपरि स्थितायाः स्वातन्त्र्येण सृष्ट्यादिकर्तृत्वं द्योतयितुम् । ततश्च बिन्दूपलक्षित-कामेश्वर-पुंविग्रहरूप-सर्वानन्दमयचक्रे कामेश्वर्यवस्थानं तदङ्कयन्त्रणेनैवेति –

**'दधानां कामराजाङ्के यन्त्रितां मुदितां स्मरेत् ।**

इति कादिमतोक्तध्यानैक्यताऽपि लभ्यते । एतदनुकूलैव–

**'कामेश्वरीं शिवस्याङ्के स्थापयेत् कुलसुन्दरि ।'**

इति 'संहितो'क्तिः । तथा–

**'शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयाम्'** इति श्रीमदाचार्योक्तैक-वाक्यताऽपि । एतदभिप्रेत्यैव-

**त्रिकोणरूपा योनिस्तु बिन्दुना बैन्दवं भवेत् ।**
**कामेश्वरस्वरूपं तद्विश्वाधारस्वरूपकम् ॥**

तथा–

**बिन्दुना शिवरूपेण शून्यरूपेण साक्षिणी ।**
**अनया सह सर्वत्र व्याप्तिनिश्चलता मता ॥**

इत्युक्तिर्मूले । तद् बैन्दवं कामेश्वरस्य रूपम् । कथं तत्कामेश्वरस्य स्वरूपमित्युत्तरं विशेषणम् । विश्वस्य प्रपञ्चस्याधारं सर्वाधिष्ठानं ब्रह्म तत्स्वरूपमेवेति स्वार्थे कप्रत्ययः । बिन्दुना विश्वाधारं ब्रह्म कथं प्रतीयत इत्युत्तरत्वेन बिन्दुना शिवरूपेणेति श्लोकः । अत एव कामेश्वर्यायुध-पूजा-साहित्येन कामेश्वरायुधपूजां वक्ष्यति मूलकारः । कामेश्वरपूजां विना च यदायुधपूजनकथनं तत्कामेश्वरस्य सगुण-निर्गुणरूपत्वमस्मदभिप्रेतं गमयति ।

तदङ्कयन्त्रणस्थितिश्च किमाकारेत्यत्र गुरूपदेशः प्रमाणमित्यलमतिविस्तरेण । प्रकृतमनुसरामः ।

तदिदं चक्रं यदा भूमौ लिख्यते तदा स्वासनस्थानाद् द्वादशाङ्गुलं त्यक्त्वाऽनन्तरद्वादशाङ्गुलो यः पात्रस्थापनदेश उक्तस्तदप्यवधानेनैव लेख्यम्। तथा सति हस्तमात्रचक्रस्यार्द्धे द्वादशाङ्गुले बिन्दुचक्रे प्रधान-देवतास्थानं भवति । यदापि स्फाटिकादिषु यन्त्रं सिद्धवन्निर्माय स्थाप्यते, तदापि यथा बिन्दुचक्रं तत्रत्यपात्रस्थापनदेशाद् द्वादशाङ्गुले पतति, तथा स्थापनीयमिति सङ्केतः । अत एव पात्रस्थापनदेशकथने 'द्वादशाङ्गुलमूर्ध्वं च अधोभागे तथाङ्गुल'मित्यूर्ध्वं द्वादशाङ्गुलत्यागकथनं प्रधानदेवतास्थानत्वद्योतनार्थम् । अधस्तनद्वादशाङ्गुलत्यागस्तूपचारस्थापनदेशार्थः । अत एवाथ पुरतो विहाय निजविष्टरादरत्निमिति कल्पान्तरवाक्येन हस्तमात्रदेशत्यागानन्तरं यन्त्रलिखनमुक्तं न विरुद्धम् । ततश्चायमर्थः –

स्वासनस्थानानन्तरद्वादशाङ्गुलदेशे उपचारस्थापनमनन्तरं द्वादशाङ्गुलदेशे पात्रस्थापनमनन्तरद्वादशाङ्गुले यथा बिन्दुचक्रमध्ये प्रधानदेवतास्थापनं भवति तथा चक्रं लिखेत् स्थापयेदिति । चक्राधारपीठं च स्वनाभिसमसूत्रोच्चं कार्यमिति सम्प्रदायः ।

**[ पात्र-स्थापनादिविधिः ]**

एवं चक्रं पीठोपरि संस्थाप्य पात्रस्थापनं कुर्यात् । तच्चेत्थम्–

स्ववामभागे जलेन चतुरस्रं मण्डलं कृत्वा वहन्नासाध्वनिकरेण सुवर्ण-रौप्य-ताम्रादिरचितं त्रिपादमाधारं संस्थाप्य तं च वह्निमण्डलरूपं ध्यात्वा तत्र स्वाग्रतः क्रमेण–'धूम्रायै॰ नीलवर्णायै॰ कपिलायै॰ विस्फुलिङ्गिन्यै॰ ज्वालायै॰ हेमवत्यै॰ कव्यवाहिन्यै॰ हव्यवाहिन्यै॰ रौद्र्यै॰ सङ्कर्षिण्यै नमो दशकलासहिताय वह्नये नमः' इति सम्पूज्य, सौवर्णं रौप्यं वा कलशं तत्र संस्थाप्य च सूर्यरूपं ध्यात्वा तत्र स्वाग्रतः 'तपिन्यै॰ तापिन्यै॰ विबुधायै॰ बोधिन्यै॰ कलिन्यै॰ शोषिण्यै॰ वारुण्यै॰ आकर्षिण्यै॰ मायायै॰ विश्वावत्यै॰ हैम्यै॰ प्रभायै नमः' इति सम्पूज्य[1] तं विशेषजलेनापूर्य तदमृतं चन्द्ररूपं विचिन्त्य–'अमृतायै॰ मानस्यै॰ तुष्ट्यै॰ पुष्ट्यै॰ प्रीत्यै॰ रत्यै॰ श्रियै॰ ह्रियै॰ सुधायै॰ रात्र्यै॰ ज्योत्स्नायै॰ हैमवत्यै॰ छायायै॰ पूर्णिमायै॰ नित्यायै॰ अमावास्यायै नमः' इति चन्द्रमण्डलं सम्पूज्य 'हसक्षमलवरयूं आनन्द-

---

1. अत्र सर्वोऽपि विधिः पूर्वसूचितप्रकारेण सम्पादनीय इति संक्षिप्य सूचितं ग्रन्थकारेण ।

भैरवाय वषट्'। 'हसक्षमलवरयीं सुरादेव्यै वौषड्' इति मन्त्रेण चन्द्ररूपं जलमभिमन्त्रयेत्।

ततो देव्या वामभागे जलेन चतुरस्रमण्डलं कृत्वा तत्र यन्त्रिकां संस्थाप्य तत्र शङ्खं संस्थाप्य शुद्धोदकेनापूर्य कलशस्थ-कारणबिन्दुं प्रक्षिप्य मूलेन सम्पूज्य वक्ष्यमाण-पूजाषडङ्गमन्त्रैः षडङ्गानि सम्पूजयेदिति सामान्यार्घः।

अत्र च यद्यपि कलशस्थापने 'मण्डलं वामतः कृत्वा जलेन चतुरस्रकम्' इति मूलेऽमुकस्य वामत इति विशिष्य नोक्तम्, तथापि देव्यपेक्षया कर्त्तुः स्ववामभागस्य झटित्युपस्थितत्वात् तस्यैव वामभागग्रहणम्। एवं चानेनैव न्यायेन–

**'विधाय वामभागे तु चतुरस्रं हि मण्डलम्'।**

इत्यत्र सामान्यार्घस्थापनेऽपि स्वस्यैव वामभाग इत्यर्थे प्राप्ते पूर्वतनवामभागापेक्षया वैलक्षण्यद्योतक-'तु'-शब्दबलान्न तद्ग्रहणम्; किन्तु देव्या वामभाग इत्यर्थः फलति। अत एव स्वदक्षिणभागे सामान्यार्घस्थापनात् समर्पणक्रियायां प्रयोगसौकर्य्यं लभ्यते।

आनन्दभैरवमन्त्रस्तूद्धृतो मूले–

**शिव-चन्द्रौ मातृकान्तं कालशक्राम्बुवह्नयः।**
**वायुश्च वामकर्णेन योजितो बिन्दुनादिना॥**
**बीजमेतत् समुच्चार्य तथा चानन्दभैरवम्।**
**ङेऽन्तं शिखामन्त्रयुक्तं पुनर्बीजं समालिखेत्॥**
**चन्द्रं हित्वाऽऽदिमं कुर्यात् कर्णे वामाक्षि योजयेत्।**
**सुरादेव्यै ततो वौषडयमानन्दभैरवः॥ इति।**

शिवचन्द्रावसकृदुक्तौ। मातृकान्तं क्षकारः। कालो मः। शक्रो लः। अम्बु वः। वह्नी रः। वायुर्यकारः। वामकर्णो दीर्घ ऊकारः। बिन्दुनादिनेति वामकर्णेनेत्यस्य विशेषणम्। शिखामन्त्रो वौषडिति। पुनस्तदेव बीजं लिखित्वा तत्रादिमं शिवं हित्वा तत्स्थाने चन्द्रं सकारं कुर्यात्। इतरत् स्पष्टम्। अत्र च मूले–

**'आभिरभ्यर्च्य मन्त्रैस्तु यजेदानन्दभैरवम्'** इत्यस्याग्रे 'शिवचन्द्रौ' इत्यनेनानन्दभैरवमन्त्र उपदिश्यते। तत्रानन्दभैरवानन्दभैरवीयुगलमन्त्रद्वयमित्यापाततो भाति यद्यपि, तथापि नात्र मन्त्रद्वयं किन्तु युगलं मिलित्वा एक एव मन्त्रो ज्ञेयस्तथैव मूलप्रतीतेः।

तत आत्म-श्रीचक्रयोर्मध्ये सामान्यार्घजलेन भूमिजानुकश्चतुरस्रं मण्डलं विधाय वहन्नासाध्वनिकरेणोपरिस्थितेन कृतसम्पुटमध्ये यन्त्रिकां धृत्वा तस्मिन् मण्डले संस्थाप्य तां च यन्त्रिकां वह्निरूपां विचिन्त्य पूर्ववद् दश-कलासहितं तं सम्पूज्य तत्र त्रिकोणवृत्त-षट्कोणं मण्डलं विभाव्य त्रिभिः कूटैः समस्तैर्मध्ये देवीं सम्पूज्य त्रिषु कोणेषु प्रथमकूटान्ते 'वाग्भवकूटाय नमः', द्वितीयकूटान्ते 'कामराजकूटाय नमः', तृतीयकूटान्ते 'शक्तिकूटाय नमः' इति स्वाग्रतः कूटत्रयं सम्पूज्य षट्कोणेषु कूटत्रयद्विरावृत्या षडङ्गानि सम्पूज्य सौवर्णं राजतं वा पात्रं तत्र संस्थाप्य पूर्ववत् सूर्यरूपं मण्डलं तत्कलाभिः सम्पूज्य पूर्ववद् यन्त्रं विभाव्य पूर्ववत् सम्पूज्य विशेषजलेना-पूर्य तत्कलाभिश्चन्द्ररूपं तत्पूर्ववत् सम्पूज्य पूर्ववद् यन्त्रं विभाव्य तत्र त्रिकोणे प्रथमकोणे षोडशस्वरान् द्वितीयकोणे कादि-तान्तान् वर्णान् तृतीयकोणे थादि-सान्तान् वर्णान् विभाव्य त्रिकोणमध्ये हकार-क्षकारौ विचिन्त्य पूर्ववत् सम्पूज्य षट्कोणेषु पूर्ववत् सम्पूज्य 'हंस आत्मने नमः' इति मन्त्रेणात्मानं सम्पूज्य पूर्वोक्तानन्दभैरवमिथुनं सम्पूज्यार्घपात्रं स्पृष्ट्वा मूलविद्यया सप्तकृत्वोऽभिमन्त्र्य धूप-दीपौ प्रदर्श्य नमस्कृत्य वक्ष्यमाणा नवमुद्राः प्रदर्श्य 'साक्षाद् ब्रह्ममयं रस'मिति विभाव्य पात्रान्तरे किञ्चित् तदुद्धृत्य तेनात्मानं पूजोपकरणं च प्रोक्षयेदिति **विशेषार्घः**। अत्र–

**'व्यस्तकूटैर्यजेत् तत्र त्रिकोणं परमेश्वरि ।**
**द्विरावृत्त्या षडङ्गानि षट्कोणेषु प्रपूजयेत् ॥**

इत्यत्र कूटत्रयक्रमात् कूटत्रयद्विरावृत्त्या षडङ्गपूजनम् । अत्र च मुख्य-षोडश्युपासकेनाद्यैरष्टभिः कूटैः सम्पुटितमेकैकं कूटं कृत्वा कूटत्रयकरणक-पूजा कार्या । तथाविधकूटत्रयद्विरावृत्त्या च षडङ्गपूजेति । तदुक्तं **'दक्षिणा-मूर्तिसंहितायाम्'**–

**श्रीविद्या-विषये देवि सम्पुटत्वेन योजयेत् ।**
**सर्वत्रायं क्रमो देवि नात्रालस्यं चरेद् बुधः ॥ इति ।**

कूटत्रयमवशिष्टैर्बीजैः सम्पुटत्वेन योजयेत् । सोऽयं यत्र यत्र कूटत्रय-करणपूजा विहिता सर्वसिद्धिप्रदचक्र-त्रिकोणादिषु तत्रापि सर्वत्र क्रमो ज्ञेय इत्यर्थः । अत एव ःकूटत्रयकरणकपूजाप्रकरणान्न त्रिबीज-न्यासादि-विषयत्वमस्येत्यपि ज्ञेयम् । गौणषोडश्यां तु वक्ष्यमाणषडङ्गन्यासवत् कूटक्रमो ज्ञेय इति ।

**हंसमात्मानमाराध्य आनन्देन च पूजयेत् ।**
**मूलविद्यां जपेत् तत्र षोडशार्णां परां ततः ॥**

इति मूले हंसमात्मानमाराध्येति सूचितो 'हंस आत्मने नमः' इति प्रयोगो लिखितस्तन्त्रसारे । मूलविद्यापदेन पञ्चदश्युच्यते । यद्यपि च मूलविद्याभिमन्त्रणे मूले सङ्ख्या नोक्ता, तथापि—

**वारत्रयं च देवेशि श्रीविद्यां सप्तधा यजेत् ।**
**स्पृष्ट्वाऽर्धकं ततो गन्ध-पुष्पाद्यैरर्चयेत् ततः ॥**

इति संहितायामुक्ता ज्ञेया ।

पात्रस्थापन-देशस्तूक्तस्तन्त्रान्तरे—

**साध्य-साधकयोर्मध्ये षट्त्रिंशदङ्गुलं भवेत् ।**
**द्वादशाङ्गुलमूर्ध्वं च अधोभागे तथाऽङ्गुलम् ॥**
**द्वादशाङ्गुलमध्यस्थं तत्र संस्थापयेद् बुधः ॥ इति ।**

तथाऽङ्गुलं द्वादशाङ्गुलम् । स्वासनस्थानदेवीस्थानयोरन्तराले षट्त्रिंशदङ्गुलं देशं प्रकल्प्याद्यन्तयोर्द्वादशाङ्गुलं त्यक्त्वा मध्यतनद्वादशाङ्गुलदेशे पात्रस्थापनं कुर्यादित्यर्थः ।

आधारस्वरूपं च 'कौलार्णवे'—

**आधारं त्रिपदं प्राहुः षट्पदं वा चतुष्पदम् ।**
**अथवा वर्त्तुलाकारं कुर्याद् देवि मनोहरम् ॥ इति ।**

त्रिकोणाकारं पादत्रयसहितं त्रिपदम् । षट्कोणाकारं षट्पदसहितं षट्पदम् । चतुष्कोणाकारं चतुष्पदसहितं चतुष्पदम् । अथवेति पक्षान्तरे । वर्त्तुलाकारं पादरहितम् । अथवा त्रिपदं चतुष्पदं षट्पदं वा वर्त्तुलाकारमित्यर्थः ।

आधारप्रमाणं तु पात्रप्रमाणमेव । तच्च—

**वस्वङ्गुलविहीनं तु न पात्रं कारयेद् बुधः ॥**

इति श्रीक्रम उक्तम् । उच्चता चतुरङ्गुला । विस्तारोऽपि चतुरङ्गुल इति । वस्वङ्गुलत्वं ज्ञेयम् ।

पात्राकारश्च **भैरवतन्त्रे—**

**'पात्राणि भगरूपाणि विशेषार्घं शृणु प्रिय'** इति । विशेषार्घपात्रं भगाकारमन्येष्वनियमः । सामान्यार्घप्रयोजनं समर्पणक्रियः । यावत्पूजासमाप्त्यर्घचालनं न कार्यमित्युक्तं 'तन्त्रसारे' । यद्यपि विशेषार्घपूरणं कलशोदकेनोक्तं मूले इति, तत् पूरणमपि प्रयोजनं कलशस्य न दृश्यते । अत एव संहितायां

कलशस्थापनं नोक्तमिति यदा केवलं सामयिकपूजा, तदैव कलशस्थापनमिति वदन्ति केचित् । तथाप्ययमभिप्रायः । मूले च–

**'अनेन चन्द्रं सम्पूज्य पूजार्हः कलशो भवेत्'** ।

इति ग्रन्थे तावद् विहितस्य कलशसंस्कारस्य प्रयोजनं पूजार्ह इत्यनेनोत्तरत्र करिष्यमाणपूजाधायकत्वमुच्यते । सा च न तावत् प्रधानपूजा, तस्याः विशेषार्घेणैव सिद्धेः । नापि कुमार्यादि-पूजा, तत्तर्पणस्य मूलेऽनुक्तेः; किन्तु मुख्यदेवीतर्पणैकप्रयोजनविशेषार्घेण प्रधानद्रव्येण परिवाराणां तर्पणस्य कर्त्तुमशक्यत्वेन तेषामपेक्षिततर्पणपूजा पूजाशब्देनोच्यते । अत एव दर्शनपूजोत्तरम्–

**'एवं सम्पूज्य कलशं श्रीविद्यां परितो यजेत्'** ।

इत्यनेन मध्ये कलशकरणक-पूर्वोक्तपरिवारपूजनमुक्तम् । अन्तेऽपि–

**'चक्रमभ्यर्च्य कलशं विधिवत् परमेश्वरि'** ।

इति कलशकरणक-चक्रपूजोपसंहृता । यद्यपि तत्रोभयत्र द्वितीया श्रूयते, तथापि सा करणत्वार्थिका ज्ञेया । आस्तां वा द्वितीयया कर्मत्वं कलशस्य, तथापि कलशं चक्रकर्मकाभ्यर्चनेन रिक्तं कुर्यादिति वाक्यार्थो ज्ञेयः । अतश्चोपक्रममध्ये परामर्शोक्त्योपसंहारैः परिवारतर्पणं कलशामृतेनेति सिद्धं कलशप्रयोजनम् । तेनैकोनविंशतिपटलोक्तानां कुमारी-सुवासिनी-सामयिकादीनां पूजा कार्येति सिद्धम् ।

एवं च जीवत्प्रतिमायागस्योच्छिष्टदोषभिया कलशामृतेन कर्त्तुमशक्तेरनोवासोऽधिकरणन्यायेन लौकिकेनैवासंस्कृतद्रव्येण सम्पादनम् । एवं स्थिते न्यायलभ्येऽर्थे बहुषु प्रामाणिकपुस्तकेषु अनुकूलतया पाठे सत्यपि व्याख्यानापाटवेन कलशमित्यस्य स्थाने सकलमिति वैपरीत्येन पठन्ति, तन्निर्मूलं साहसम् । अस्तु वा कथञ्चित् सकलमित्येव पाठस्तावतापि परिशेषन्यायोपलब्धबृंहितपूजार्ह इत्येतत् सिद्धवन्निर्देशान्यथाऽनुपपत्त्या 'उपरि हि देवेभ्यो धारयति' इतिवत् कलशामृतेन परिवारपूजां कुर्यादिति विधिकल्पनं युक्तिसहमेवेति ज्ञेयम् ।

विशेषार्घस्य केवलं श्रीसुन्दरीतर्पणमेव प्रयोजनमिति तत्त्वम् । तत **आत्मानं तु समभ्यर्च्य भूतान् सन्त्रासयेत् ततः'** इति मूले सूचितमात्मपूजनं कुर्यात् । तच्च विशेषार्घ-कलशोदकाभ्यां क्रियते तदोच्छिष्टदोषः स्यादत आत्मपात्रं सहेतुकं विशेषार्घ-स्वात्मनोर्मध्ये सामान्यार्घवत् संस्थाप्य सम्पूज्य गन्धपुष्पाक्षतैरात्मानं देवरूपं सम्पूज्य पात्रान्तरे तत्रत्यजलमादाय 'प्रथम-

कूटायात्मतत्त्वाय स्वाहा, द्वितीयकूटाय विद्यातत्त्वाय स्वाहा, तृतीयकूटाय शिवतत्त्वाय स्वाहा, सम्पूर्णविद्यया सर्वतत्त्वाय स्वाहा' इत्येवं सङ्गृह्य स्वानन्दनिमग्नो मूलविद्यान्ते अस्त्राय फडिति उच्चार्य 'प्राचीं दिशमस्त्रेण बध्नामि नमः' इत्येवं दिग्बन्धनं कृत्वा पुनरस्त्रान्तमूलविद्ययोर्ध्वमुखो दिव्यान् करास्फोटनैरन्तरिक्षगान् पार्ष्णिघातैर्भौमान् भूतान् सन्त्रास्य भूतशद्धिं कुर्यात् । सा चेत्थम्—

आसने दृढमासीनः कनिष्ठानामिकाङ्गुष्ठैर्नासापुटं धृत्वा यमिति बीजमुच्चार्य वामपुटेनापूर्य पुनर्वायुबीजं द्विरावृत्त्य कुम्भकं कृत्वा दक्षिणपुटेन विरेचनेन—

**वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम् ।**
**ब्रह्महत्या शिरो यस्य स्वर्णस्तेयभुजद्वयम् ॥**
**उपपातक-रोमाणमङ्गं प्रत्यङ्गपातकम् ॥**
**सुरापान-हृदा युक्तं गुरुतल्पकटिद्वयम् ॥**
**खड्ग-चर्मधरं क्रुद्धं पापं कुक्षौ विचिन्तयेत् ॥**

इति चिन्तितवामकुक्षिस्थित-पापसहित-पापपुरुषतनुं संशोष्य तं च शुष्कं तेनैव क्रमेण पापसहितं वह्निबीजेन सन्दह्य पापरहितं जलबीजेनाप्लाव्य भूबीजेन दृढीकृत्य पञ्चाशद्वर्णसङ्ख्यावयवान्निष्पन्नान् देहे विभाव्य तं देहं स्थिरीकृत्य 'आं सौऽहं' इति प्राणप्रतिष्ठामन्त्रेण जीवं देहे संयोज्य तथाविधं स्वदेहे स्थिरीकृत्य ऋष्यादिन्यासान् कुर्यात् ।

अत्र च यद्यपि बालातिदेशेनैवेह भूतत्रासन-भूतशुद्धि-न्यासादि प्राप्नुयादेवेति पुनः—

**आत्मानं तु समभ्यर्च्य भूतान् सन्त्रासयेत् ततः ।**
**मूलविद्यास्त्रमुच्चार्य दिग्बन्धस्फोटनादयः ॥**
**उन्मुखः सन्नतो देवि भूतशुद्धिं तु पूर्ववत् ।**
**ततो न्यासादिकं कुर्यात् सन्नाहं तु शरीरके ॥**

इत्यादि वचनानि व्यर्थानीवापाततो भान्ति । तत्रायं परिहारः—बालायां चासनोपवेशनानन्तरं भूतत्रासनं मन्त्रोद्धार-पीठस्थापन-पात्रस्थापनाद्यं पूर्वमङ्गं विहितम् । तच्च प्रकृतभूत-त्रासनादिपदार्थान् मा बाधीत्येतदर्थमेतानि वचनानि केवलं 'वेदं कृत्वा वेदिं करोति' इतिवत् क्रमविधायकानि। तत्र प्रकृतिप्राप्तभूतत्रासनानुवादेन 'आत्मानं तु समभ्यर्च्य' इत्यनेनानन्तर्य-

क्रमो विधीयते । अनन्तरं च भूतत्रासनप्रकारोऽपूर्वो मूलविद्यास्त्रमित्यनेनोक्तः । स्फोटनशब्देन करास्फोटनमित्युच्यते,

**पार्ष्णिघात-करास्फोटैरूर्ध्ववक्त्रस्तु मान्त्रिकः ।**

**स्वर्भू-भूतानि सन्त्रास्य..........................॥**

इति संहितैकवाक्यात् । उन्मुखः सन्निति पूर्वान्वयि । तथाविधापूर्वाङ्गानन्तर्यम् । 'ततो देवि भूतशुद्धिमित्यनेन विधीयते' । ततः प्राणप्रतिष्ठामन्त्रेण शरीरे सन्नाहं जीवसम्बन्धं प्राकृतन्यासादिकं च कुर्यात् । पूर्ववदित्युत्तरान्वयि । संनाहं त्विति तुशब्दार्थ इति न काऽप्यनुपपत्तिः । इतरथा करशुद्ध्याद्यपूर्वन्यासानान्तर्यमेव प्राकृतन्यासादीनामापद्येतेति भावः। प्राणायामलक्षणं तूक्तं द्वितीयपटले—

**आसने सम्यगासीनो वामेनापूर्य चोदरम् ।**

**कुम्भकेन द्विरावृत्त्या दक्षिणेन च रेचयेत् ॥**

**कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।**

**प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥ इति ।**

प्राणायाम-प्रतिष्ठामन्त्रस्तूद्धृतस्तत्रैव—

**मुखवृत्तं समुच्चार्य हंसस्तु विपरीततः ।**

**उद्धरेत् परमेशानि विद्येयं त्र्यक्षरी भवेत् ॥ इति ।**

मुखवृत्तमिति । विपरीतो हंसः सोऽहमिति । ततो न्यासानारभेत ।

१-षडङ्ग-न्यासः— अस्य श्रीमहात्रिपुरसुन्दरी त्रिपुरामन्त्रस्य दक्षिणामूर्त्तये ऋषये नमः शिरसि । पङ्क्तिच्छन्दसे नमो मुखे । महात्रिपुरसुन्दरीदेवतायै नमो हृदि । क ४ बीजाय नमो नाभौ । स ३ शक्तये नमो गुह्ये । ह ५ कीलकाय नमः पादयोः । इति ऋष्यादिन्यासं कृत्वा क ४ नमो नाभ्यादिपादान्तम्, ह ५ नमो गलादिनाभ्यन्तम्, स ३ मूर्द्धादिगलान्तं विन्यस्य क ४ वामपाणितले, ह ५ दक्षपाणितले । स ३ करसम्पुटे विन्यस्य 'द्रां क्षोभणबाणाय नमः अङ्गुष्ठयोः । द्रीं द्रावणबाणाय नमस्तर्जन्योः । क्लीं आकर्षणबाणाय नमः मध्यमयोः । ब्लूं वशीकरणबाणाय नमः अनामिकयोः । सः उन्मादबाणाय नमः कनिष्ठिकयोः' । इति विन्यस्य तथैव ह्रीं कामाय॰ क्लीं मन्मथाय॰ ऐं कन्दर्पाय॰ ब्लूं मकरध्वजाय॰ स्त्रीं मीनकेतवे नम इति विन्यस्य क ४ अं॰ ह ४ त॰ स ३ मध्य॰ क ५ अ॰ह ५ कनि॰ स ३ करतल॰ । इति विन्यस्य क ४ हृदयाय नमः । ह ५ शिरसे स्वाहा । स ३ शिखायै वषट् । क ४ कवचाय हुं । ह ५ नेत्रत्रयाय वौषट् । स ३

अस्त्राय फट् । इति षडङ्गन्यासं कृत्वा मातृकान्यासं कुर्यात् । बाण-काम-बीजान्युद्धृतानि मूले द्वितीयपटले–

थान्तं द्वयं समालिख्य वह्निसंस्थं क्रमेण तु ।
मुखवृत्तेन नेत्रेण वामेन परिमण्डितम् ॥
बाणद्वयमिदं प्रोक्तं मादनं भूमिसंस्थितम् ।
चतुर्थस्वरबिन्द्वाढ्यं नादरूपं वरानने ॥
काऽन्तं शक्रसमायुक्तं वामकर्णविभूषितम् ।
बिन्दुनादसमायुक्तं सर्गवाँश्चन्द्रमाः प्रिये ॥
पञ्चबाणान् महेशानि! नामानि शृणु पार्वति ।
क्षोभणो द्रावणो देवि तथाऽऽकर्षणसंज्ञकः ॥
वश्योन्मादौ क्रमादेव नामानि परमेश्वरि ।
कामास्तत्रैव विज्ञेयास्तेषां बीजानि संशृणु ॥
पराबीजं मध्यबाणं वाग्भवं परमेश्वरि ।
तुर्यबाणं ततश्चैव स्त्रीबीजं च क्रमात् प्रिये ॥ इति ।

अस्यार्थः–

थकारान्तद्वयं दकारद्वयं रकारयुतं कृत्वा तन्मध्ये एको मुखवृत्तेन 'आम्' इत्यनेन । द्वितीयस्तु वामनेत्रेण ईकारेण मण्डितः कार्य इत्याद्यं बाणद्वयम् । मादनं ककारः, भूमिर्लकारस्तत्संस्थं कृत्वा चतुर्थस्वरेणेकारेण बिन्दुनादयुतेन युक्तं कुर्यात् । फान्तं बकारः शक्रेण लकारेण युतं कृत्वा वामकर्णेन दीर्घ-ऊकारेण भूषितं बिन्दुनादयुतं कुर्यात् । चन्द्रमाः सकारः, सर्गवान् विसर्गवान् । पराबीजं ह्रीमिति एकम् । मध्यबाणबीजं क्लीमिति, द्वितीयं वाग्भवं तृतीयं प्रसिद्धम् । तुर्यबाणं ब्लूमिति चतुर्थम् । स्त्रीमिति-बीजं पञ्चममिति । ततः –

मातृकान्यासः –

अस्य श्रीमातृकान्यासमन्त्रस्य ब्रह्मर्षये नमः शिरसि । गायत्री छन्दसे नमो मुखे । श्रीमातृकादेवतायै नमो हृदि । कं ३४ बीजेभ्यो नमो नाभौ अं १२ शक्तये नमो गुह्ये । इति विन्यस्य –

पञ्चाशद्वर्णरूपाढ्यां कपर्दशशिभूषणाम् ।
शुद्धस्फटिकसङ्काशां शुद्धक्षौमविराजिताम् ॥
मुक्तारत्नस्फुरद्भूषां जपमालां कमण्डलुम् ।

"पुस्तकं वरदानं च बिभ्रतीं परमेश्वरीम्" इति ध्यात्वा अं कं ४ आं हृदयाय नमः । इं चं ४ ईं शिरसे स्वाहा । उं टं ४ ऊं शिखायै वषट् । एं तं ४ ऐं कवचाय हुं । ओं पं ४ औं नेत्रत्रयाय वौषट् । अं यं९ अः अस्त्राय फट् । इति षडङ्गं विन्यस्य, अं १५ नमः षोडशपत्रे कण्ठे । कं १२ नमो द्वादशपत्रे हृदि । डं १० नमो दशदले नाभौ । बं ६ नमः षड्दले लिङ्गमूले । वं ४ नमश्चतुर्दले आधारे । हं क्षं नमो द्विदले भ्रूमध्ये" । इत्यन्तर्मातृकां विन्यस्य–

"अं नमः शिरसि । आं नमो मुखवृत्ते । इं नमो दक्षनेत्रे । ईं नमो वामनेत्रे । उं नमो दक्षकर्णे । ऊं नमो वामकर्णे । ऋं नमो दक्षनासापुटे । ॠं नमो वामनासापुटे । लृं नमो दक्षकपोले । लॄं नमो वामकपोले । एं नम ऊर्ध्वोष्ठे । ऐं नमोऽधरोष्ठे । ओं नम ऊर्ध्वदन्तपङ्क्तौ । औं नमोऽधो-दन्तपङ्क्तौ । अं नमो मूर्ध्नि । अः नम आस्ये । कं नमो दक्षबाहुमूले । खं० लक्षकूर्परे । गं० लक्षमणिबन्धे । घं० दक्षकराङ्गुलिसन्धिषु । ङं० दक्षकराङ्गुल्यग्रेषु। चं० वामबाहुमूले। छं० वामकूर्परे । जं० वाममणिबन्धे । झं० वामकराङ्गुलिसन्धिषु । ञं० वामकराङ्गुल्यग्रेषु । टं० दक्षपादमूले । ठं० दक्षजानौ । डं० दक्षगुल्फे । ढं० दक्षपादाङ्गुलिसन्धिषु । णं० दक्ष-पादाङ्गुल्यग्रेषु । तं० वामपादमूले । थं० वामजानौ । दं० वामगुल्फे । धं० वामपादङ्गुलिसन्धिषु । नं० वामपादाङ्गुल्यग्रेषु । पं० दक्षपार्श्वे । फं० वामपार्श्वे । बं० पृष्ठे । भं० नाभौ । मं० जठरे । यं० त्वगात्मने हृदि । रं० असृगात्मने दक्षांसे । लं० मांसात्मने वामांसे । वं० मेद-आत्मने ककुदि । शं० अस्थ्यात्मने दक्षकक्षे । षं० मज्जात्मने वामकक्षे । सं० शुक्रात्मने हृदयात् पाणियुग्मान्तम् । हं० प्राणात्मने हृदयादि-पादयोः । ळं० जीवात्मने जठरे व्यापकम् । क्षं० परमात्मने मुखे व्यापकं कुर्यात् । इति मातृकान्यासः । इत्यन्तर्मातृकां न्यस्य "सर्वाङ्गन्यास"माचरेत् ।

अत्र च –

[३. सर्वाङ्ग-न्यासः]

**मूर्द्धा च मुखवृत्तं च नेत्रकर्णेषु पार्वति ।**
**नासागण्डोष्ठदन्तेषु मूर्द्धाऽऽस्येषु क्रमान्न्यसेत् ।**

इत्यनेन "षोडशस्वरन्यास" उक्तः ।

**पाणिपादयुगस्यान्तं सन्ध्यग्रेषु क्रमात् प्रिये ।**
**पार्श्वद्वये पृष्ठनाभि-जठरेषु क्रमान्न्यसेत् ॥**

इत्येनन "कादि पञ्चवर्गन्यास" उक्तः। तत्र "पाणिपादयुगस्यान्तः" शब्देन मध्यो विवक्षितः। स चांस-कूर्पर-मणिबन्धरूपः पाण्योः। पाद-मूल-जानु-गुल्फादिरूपः पादयोरिति यथायोग्यं ज्ञेयम्। तथा–

"यादीन् सधातुकान् देवि क्रमेणैव ततो न्यसेत्"।

इत्यनेन यादीनां दशानां वर्णानां न्यास उक्तः। धातुभिः सहितान् सधातून्। धातुशब्दो हि भूमा-न्यायेन प्राणात्मादीन् त्रीनभिदधाति। के ते दश धातव इत्यपेक्षायाम्

त्वगसृङ्मांस-मेदोऽस्थि-मज्जा-शुक्राणि धातवः।
प्राणात्मा चैव जीवात्मा परमात्मा च विन्यसेत्॥

इत्यनेन त उक्ताः। शुक्रान्तानि च पुनः प्राणात्मानि च धातव इत्यर्थः। तान् सर्वान् विन्यसेदित्यन्वयः। केषु स्थलेष्वित्यपेक्षिते–

हृदये बाहुमूले च तथा परगले प्रिये।
कक्षयोर्हृदयप्रान्ते पाणि-पाद-युगे तथा॥
जठराननयोर्देवि व्यापकं च क्रमान्न्यसेत्॥

इति स्थलान्युक्तानि। तत्र हृदयस्य प्रान्ते अन्ते पाणियुगं पादयुगं च तस्मिन्नित्यर्थः। तथा तेनैव प्रकारेण जठराननयोरन्तिमाभ्यामक्षराभ्यां व्यापकं कुर्यात्। स्पष्टोऽयमर्थः संहितायाम्।

त्वगसृङ्मांस-मेदोऽस्थि-मज्जा-शुक्राणि धातवः।
प्राणजीवौ सपरमौ यकारादिषु संस्थिताः॥
क्रमेण देवदेवेशि न्यस्तव्या अन्त आत्मकाः।
हृद्दोर्मूलेषु विन्यस्य तथा परगले न्यसेत्॥
कक्षद्वये हृदारभ्य पाणि-पादद्वये तथा।
जठराननयोर्व्याप्तिं न्यसेदित्यप्युरूपिणीम्॥ इति॥

**[४. त्रिप्रकारको विद्यान्यासः]**

**अथ विद्या-न्यासः–**

स च यथा–"क ४ नमो दक्षमणिबन्धे। ह ५ नमो दक्षकरतले। स ३ नमो दक्षकराग्रे। क ४ नमो वाममणिबन्धे। ह ५ नमो वामकरतले। स ३ नमो वामकराग्रे। क ४ नमो दक्षकक्षे। ह ५ नमो दक्षकूर्परे। स ३ नमो दक्षपाणौ। क ४ नमो वामकक्षे। ह ५ नमो वामकूर्परे। स ३ नमो वामपाणौ। क ४ नमो दक्षपादगुल्फे। ह ५ नमो वामपादतले। स ३ दक्षपादाग्रे। क ४ नमो वामपादगुल्फे। ह ५ नमो वामपादतले। स

३ नमो वामपादाग्रे । क ४ नमो दक्षपादमूले । ह ५ नमो दक्षजानुनि । स ३ नमो दक्षपादे । क ४ नमो वामपादमूले । ह ५ नमो वामपादजानुनि । स ३ नमो वामपादे । क ४ नमो मूर्ध्नि । ह ५ नमो हृदि । स ३ नमो लिङ्गे । इति **"सृष्टिन्यासं"**कृत्वा–

क ४ नमो लिङ्गे । ह ५ नमो हृदि । स ३ नमो मूर्ध्नि । क ४ नमो वामपादे । ह ५ नमो वामपादजानुनि । स ३ नमो वामपादमूले । क ४ नमो दक्षपादे । ह ५ नमः दक्षजानुनि । स ३ नमो दक्षपादमूले । क ४ नमो वामपादाग्रे । ह ५ नमो वामपादतले । स ३ वामपादगुल्फे । क ४ नमो दक्षपादाग्रे । ह ५ नमो दक्षपादे । स ३ नमो दक्षपादगुल्फे । क ४ नमो वामपाणौ । ह ५ नमो वामकूर्परे । स ३ नमो वामकक्षे । क ४ नमो दक्षपाणौ । ह ५ नमो दक्षकूर्परे । स ३ नमो दक्षकक्षे । क ४ नमो वामकराग्रे । ह ५ नमो वामकरतले । स ३ नमो वाममणिबन्धे । क ४ नमो दक्षकराग्रे । ह ५ नमो दक्षकरतले । स ३ नमो दक्षमणिबन्धे । इति **संहारन्यासं** कृत्वा पुनः पूर्वोक्तं सृष्टिक्रमन्यासं कुर्यात् । इति त्रिप्रकारको विद्यान्यासः ।

अत्र च यद्यपि–

**...........................विद्यान्यासं सुरेश्वरि ।**
**कुर्वीत देहसन्नाहं त्रिभिर्बीजैः क्रमात् प्रिये ॥**
**करयोर्विन्यसेदादौ मणिबन्धे तलेऽग्रके ।**
**दक्षे वामे च विन्यस्य कक्ष-कूर्परपाणिषु ॥**
**पुनर्दक्षे च वामे च पादयोश्च तथा न्यसेत् ।**
**नादान्ते हृदये लिङ्गे न्यसेद् देवि ततः परम् ॥**
**एतेष्वङ्गेषु देविशि संहारक्रमतो न्यसेत् ।**
**विद्यां सृष्टिक्रमेणैव जानीहि परमेश्वरि ॥**

इति मूले सृष्टिन्यासो नोक्तस्तथापि संहारस्य सृष्टिं विनाऽसम्भवात् सृष्टिरपि संहारोक्त्या आक्षिप्यते । "संहृतस्य पुनः सृष्टिन्यासो विद्यां सृष्टिः" इत्यनेनोक्तः । "पुनर्दक्षे च वामे तु पादयोश्च तथा न्यसेत्" इति । तथाशब्देन यथा वाम-दक्षिणपाण्योर्मणिबन्ध-तलाग्र-कक्ष-कूर्पर-पाणिरूपेषु षट्सु स्थानेषु न्यासस्तेनैव प्रकारेण तत्स्थानीयेषु गुल्फ-पादतलाग्रपादमूल-जानुपादरूप-स्थानेषु दक्ष-वामपादयोरपि न्यासः कार्य इत्युक्तं भवति । ततो **"नवयोनिन्यासं"** कुर्यात् । स च यथा–

[ ५. नवयोनि-न्यासः ]

क ४ नमो दक्षश्रोत्रे । ह ५ नमो वामश्रोत्रे । स ३ नमो चिबुके । क ४ नमो दक्षशङ्खे । ह ५ नमो वामशङ्खे । स ३ नमो मुखमण्डले । क ४ नमो दक्षदृशि । ह ५ नमो वामदृशि । स ३ नमो नासिकायाम् । क ४ नमो दक्षांसे । ह ५ नमो वामांसे । स ३ नमो हृंदि । क ४ नमो दक्षकूर्परे । ह ५ नमो वामकूर्परे । स ३ नम उदरे । क ४ नमो दक्षजानौ । ह ५ नमो वामजानौ । स ३ नमो अन्धुनि । क ४ नमो दक्षपादे । ह ५ नमो वामपादे । स ३ नमो गुह्ये । क ४ नमो दक्षपार्श्वे । ह ५ नमो वामपार्श्वे । स ३ नमो हृदि । क ४ नमो दक्षस्तने । ह ५ नमो वामस्तने । स ३ नमः कण्ठे । इति ।

ततस्तर्जनीमध्यमानामिकाभिः क ४ हृदयाय नमः । मध्यमानामिकाभ्यां ह ५ शिरसे स्वाहा । एकेनाङ्गुष्ठेन स ३ शिखायै वषट् । दशभिरङ्गुलीभिः क ४ कवचाय हुं । तर्जनीमध्यमानामिकाभिः ह ५ नेत्रत्रयाय वौषट् । तर्जनीमध्यमाभ्यां स ३ अस्त्राय फट् । इति षडङ्गं कृत्वा–"द्रां क्षोभणबाणाय नमः" इत्येवं पूर्वोक्तविधया ललाट-गल-हृदय-नाभि-मूलाधारेषु क्रमेण विन्यस्य तथैव "ह्रीं कामाय नमः" इत्येवं पूर्वोक्त-विधया तेष्वेव स्थानेषु कामान् विन्यस्य मूलेन सर्वशरीरे व्यापकं कुर्यात् । अत्र च–

षडङ्गमाचरेद् देवि द्विरावृत्त्या क्रमेण तु ।
त्रि-द्व्येक-दशक-त्रि-द्वि-सङ्ख्यया शैलसम्भवे ॥
अङ्गुलीषु पुनर्देवि बाणान् कामाँश्च विन्यसेत् ।
ललाट-गल-हृन्नाभि-मूलाधारेषु वै क्रमात् ॥
मूलेन व्यापकं कृत्वा प्राणायामं समाचरेत् ॥

इत्यत्र मूले यद्यपि अङ्गुलिसङ्ख्या कासां कासां योजनेनेति विशेषो न ज्ञायते, तथापि–

कनिष्ठिकाङ्गुष्ठरहितैस्त्रिभिस्तु हृदि विन्यसेत् ।
मध्यमाऽनामिकाभ्यां तु न्यसेच्छिरसि मन्त्रवित् ॥
शिखाङ्गुष्ठेन विन्यस्य दशभिः कवचं न्यसेत् ।
हृद्गतैर्नेत्रयुग्मे च विन्यसेत् परमेश्वरि ॥
तर्जनी-मध्यमाभ्यां तु ततोऽस्त्रं विन्यसेत् प्रिये ॥

इति संहितावचनाद् योजनाप्रकारो ज्ञेयः । अङ्गुलीष्विति पूर्वेण सम्बद्ध्यते । "प्राणायामं समाचरे"दित्यन्ते विहितः प्राणायामः प्रकृतौ बालायां न्यासानां तावतामेव समाप्तेरन्तेऽपेक्षितः प्राणायामोऽर्थादन्ते विहितः । विकृताविह तु प्राकृतन्यासानन्तरं वैकृतानामपि न्यासानां विधानात् सकलन्यासानन्तरं प्राणायामः कार्य इति भावः । अथ "वैकृतान् न्यासान्" कुर्वीत--

[६-कर-शुद्ध्यादि-न्यासाः]

अं मध्यमाभ्यां नमः । आं अनामिकाभ्यां नमः । सौः कनिष्ठिकाभ्यां नमः । अं अङ्गुष्ठाभ्यां नमः । आं तर्जनीभ्यां नमः । सौः करतल-करपृष्ठाभ्यां नमः। इति करशुद्धि-न्यासं कृत्वा--ह्रीं क्लीं सौः आत्मासनाय नमः । इति स्वासने सम्पूज्य चक्रराजोपरि--"हैं हक्लीं हसौः चक्रासनाय नमः, हसैं हक्लीं हसौः सर्वमन्त्रासनाय नमः, ह्रीं क्लीं ब्लें साध्यसिद्धा-सनाय नमः" इति सम्पूज्य एतैरेव पूर्वोक्तैर्मन्त्रैः क्रमेण पादयोर्जान्वोर्लिङ्गे गुदे "आसनचतुष्टयं" विन्यस्य, पुनरपि त्रि-द्व्येक-दशक-त्रि-द्वि-सङ्ख्या-ङ्गुलीभिः पूर्वोक्तप्रकारेण "षडङ्गन्यासं" विधाय प्राणायामं कुर्यात् । इति **पञ्चदशीन्यासः ।**

अत्र च यद्यपि न्यायेन "क ४ हृदयाय नमः" इत्यादि-पूर्वोक्तविधया प्राप्तमप्यूहम्-

**'कुमार्यास्त्रिपुरेशान्याः षडङ्गानि च पूर्ववत्'** ।

इति वचनेन बाधित्वा 'ऐं हृदयाय नमः' इत्येवं षडङ्ग-प्रयोगं लिखन्ति केचित् । वस्तुतस्तु पुनः पञ्चबाण-पञ्चकामन्यासानन्तरं प्रकृतौ 'त्रि-द्व्येक-दशके'त्याद्यङ्गुलिसङ्ख्यानियमेन विहितस्य षडङ्गन्यासस्यातिदेशतः प्राप्तावपि 'चतुरासनन्यासा'नन्तरं पुनः षडङ्गन्यासाप्राप्तौ सत्यां 'कुमार्यास्त्रिपुरेशान्याः षडङ्गानि चे'ति पूर्ववाक्येन पूर्वतनप्रकारविशिष्टषडङ्गन्यासो विधीयते । एतावतैव कुमारी-त्रिपुरेशानी-प्रकारसाम्यविधानेन वचनसार्थक्ये सति अन्यथाऽनुपपत्त्यभावान्न न्यायप्राप्तोहो बाधनीय इति मम भाति । अत एव 'संहितायां' चतुरासन-न्यासानन्तरमेव त्रि-द्व्येकदशकेत्यादि-सङ्ख्या-विशिष्ट-षडङ्गन्यासविधानात् तदेकवाक्यताऽपि लभ्यते । इति दिक् ।

षोडश्युपासकस्य तु 'त्रिबीजन्यासान्' विहाय सर्वेऽपि प्राक्तना न्यासा विज्ञेयाः । अत एवातिदेशतो नवयोनिन्यासप्राप्त्यभावादुपदेशरूपेण पुनर्विधानं वक्ष्यते । कर-हृदय-षडङ्ग-न्यासस्तु आद्यबीजपञ्चकेन हृदयम्,

तदुत्तरबीजत्रयेण शिरः । तदूर्ध्वगत-कूटत्रयेण शिखादि-नेत्रान्तमङ्गत्रयम्, अन्तिमबीजपञ्चकेनास्त्रमित्येवं प्रकारेण कार्य इति 'सौभाग्यरत्नाकर'-कारादयः साम्प्रदायिकाः ।

गौण-षोडश्युपासकस्य तु—आदौ योजित-बीजसहितमाद्यं कूटम् । द्वितीय-तृतीये तु यथाश्रुते । त्रयाणां च द्विरावृत्त्या षडङ्ग इति सङ्केतः । ये त्वितोऽनन्तरम्—

**'अथ वक्ष्ये महेशानि श्रीविद्यान्यासमुत्तमम्'** ।

इति विहिताः श्रीविद्योद्देशेन न्यासास्ते तु पञ्चदश्यां नैव भवन्तीति प्रागवोचाम । येऽपि षोढान्यास-नित्यान्यासादयो मध्ये विहितास्तेऽपि 'अथ वक्ष्ये महेशानि' इत्यारभ्य 'श्रीविद्यार्णैर्न्यसेद् देवि मन्त्री सर्वसमृद्धयः' इत्यन्तेन विहितानां श्रीविद्यान्यासानामन्तराले विहिता इत्यवान्तर-प्रकरणाच्छ्रीविद्याङ्गमेवेति 'पञ्चदश्यां लुप्यन्त' इत्यादि सुजनैरूह्यम् ।

**[७ श्रीविद्यान्यासाः]**

अथ षोडश्युपासकस्य श्रीविद्यान्यासाः । ते यथा—

तत्र ब्रह्मरन्ध्रेऽरुणप्रभां स्रवत्सुधामहासौभाग्यदां सम्पूर्णां षोडशार्णां स्मृत्वा वामांसदेशे सरलतर्जनीक-वाममुष्टिरूप-सौभाग्यदण्डिनीं मुद्रां भ्रामयेत्। ततोऽन्तरङ्गुष्ठ-वाममुष्टिरूप-रिपुजिह्वाग्रहामुद्रां पादमूले न्यसेत् । पुनस्तामेव त्रैलोक्यस्य कर्त्ताऽहमिति ध्यात्वा तिलके न्यसेत् । ततः सम्पूर्णां विद्यां वेष्टनत्वेन वदने विन्यस्य सम्पूर्णां देहे व्यापकत्वेन विन्यस्य योनिमुद्रां मुखे विन्यस्य नमेदिति श्रीविद्यापूर्णरूपः **सौभाग्यवर्द्धनो न्यासः** ।

अत्र च यद्यपि 'व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाऽभिवन्द्य चे'ति व्यापकान्त-न्यासमात्रमेवोक्तम्, न तु वदन-वेष्टनन्यासस्तथापि व्यापक-शब्दोक्तव्यापकतायाः पूर्वतन-न्यास-सापेक्षत्वात् सम्पूर्णामेव वदने वेष्टनत्वेन विन्यसेदिति संहितोक्तपूर्वभागेनोक्तो वेष्टनन्यासोऽप्याक्षिप्यत इति ज्ञेयम् । तथाऽग्रेऽपि सम्मोहनाख्यन्यासे ब्रह्मरन्ध्र-न्यासात् पूर्वं मूर्धानं परितोऽनामिकाभ्रामणं नोक्तम्, तथाप्यविरोधात् साम्प्रदायिकैरभ्युपेतत्वाच्च 'परिभ्राम्यानामिकां तु मूर्धानं परितः प्रिये' । इति संहितोक्तमूर्धाभ्रामणं ग्राह्यम् । ततोऽनामिकां मूर्धानं परितः परिभ्राम्यं ब्रह्मरन्ध्र-मणि-मणिबन्ध-ललाटेषु विन्यसेदिति **'सम्मोहनाख्यो न्यासः'** ।

ततः श्रीविद्यां मनसि स्मृत्वा त्रैलोक्यमरुणं ध्यायन् "श्रीं नमः पादयोः। ह्रीं नमो जङ्घयोः । क्लीं नमो जान्वोः । ऐं नमो बाह्वोः । सौः नमो

अन्धुनि । ओं नमः पृष्ठे । ह्रीं नमो नाभौ । श्रीं नमः पार्श्वयोः । क ४ नमः स्तनयोः । ह ५ नमः अंसयोः । स ३ नमः कर्णयोः । सौः नमो ब्रह्मरन्ध्रे । ऐं नमो वदने । क्लीं नमो भ्रुवोः । ह्रीं नमः कण्ठप्रदेशे । श्रीं नमः करवेष्टनयो"रिति **'श्रीविद्यार्णसंहार-न्यासः'** ।

ततः सृष्ट्यर्थं पूर्ववन्मातृकान्यासं कुर्यात् । ततो वशिन्याद्यष्ट-शक्तीर्मनसा सम्पूज्य अं १५ ब्लूं वशिनीवाग्देवतायै नमः शिरसि । क ४ क्ल्ह्रीं कामेश्वरी-वाग्देवतायै नमो ललाटे । चं ४ न्व्लीं मोदिनी-वाग्देवतायै नमो भ्रूमध्ये । टं ४ य्लूं विमलावाग्देवतायै नमः कण्ठे । तं ४ ज्म्रीं अरुणा-वाग्देवतायै नमो हृदि । पं ४ ह्स्ल्व्यूं जयिनी-वाग्देवतायै नमो नाभौ । यं ४ झ्म्र्यूं सर्वेश्वरी-वाग्देवतायै नमो मूलाधारे । षं ४ क्ष्म्रीं कौलिनी-वाग्देवतायै नमः पादमूलाद्यग्रान्तम् । इति **'वशिन्यादि-न्यासः'**

वशिन्यष्टकबीजान्युद्धृतानि मूले—

**अवर्गान्ते लिखेद् बीजं वह्नि-फान्तं क्षमान्वितम् ।**
**वामकर्ण-विशोभाढ्यं बिन्दुनादाङ्कितं प्रिये ॥**

वह्निः रकारः । फान्तो बकारः । क्षमा लकारः । इतरत् स्पष्टम् । तथा—

**कवर्गान्ते महेशानि कामेशीबीजमुत्तमम् ।**
**मेरूद्धृतं समुच्चार्य वाग्देवीं पूजयेत् ततः ॥**

नवार्णमेरु-प्रसङ्गेनोद्धृतम्—

**'सकला-भुवनेशानीकामेशीबीजमुत्तमम्' ।**

इत्यनेन प्रागुद्धृतम् । तथा—

**चवर्गान्ते धान्त-नीरक्षमा-तूर्यस्वरान्वितम् ।**
**मोदिनीं पूजयेद् देवीं वाचां तु तदनन्तरम् ॥**

धान्तो नकारः । नीर-क्षमे वकार-लकारौ । तूर्यस्वर ईकारः । तथा—

**टवर्गान्ते वायुबीजं भूमिसंस्थं महेश्वरि ।**
**वामकर्णेन्दु-बिन्द्वाढ्यं विमलावागधीश्वरी ॥**

वायुर्यकारः । भूमिर्लकारः । तथा—

**तवर्गान्ते जमक्षाद्यं वामनेत्र-विभूषितम् ।**
**बिन्दु-नादाङ्कितं बीजं वाग्देवीमरुणां यजेत् ॥**

जकार-मकारौ प्रसिद्धौ । क्ष्मा लकारस्तस्याद्यं रकारः । तथा—

**पवर्गान्ते व्योमचन्द्रक्ष्मातोयाग्नि-प्रमुख्यकम् ।**
**ऊकारस्वरसंयुक्त-बिन्दु-नाद-कलान्वितम् ॥**

जयिनीं पूजयेद् वाचां देवतां वीरवन्दिते ॥

व्योम-चन्द्र-क्ष्मा-तोयाग्नि हसलवान्यक्षराणि । अग्नेः रकारस्य प्रमुख्य-कमादिभूतं यकारः । तथा—

यवर्गान्ते जान्तकाल-रेफवायु-समन्वितम् ।
ऊमाद्यं देवतां वाचां सर्वेशीं परिपूजयेत् ॥

जान्तः सकारः । कालो मकारः । रेफ-वायू र-य इति तदग्रे ऊमिति योज्यम् । तथा—

क्षमा-वह्निगतं तूर्य-बीजेन परिवेष्टयेत् ।
बिन्दु-नाद-कलाक्रान्तं कौलिनी वाचमर्चयेत् ॥
शवर्गान्ते महेशानि न्यसेत् सर्वार्थसिद्धये ॥

अत्र क्षमास्वरूपं क्षकार-मकाराविति यावत् । तत्रादौ 'पूजयेत्, पूजयेत्' इत्युक्तेर्मानसपूजा आदौ, ततो न्यासा इति सम्प्रदायः । ततः षोढान्यासाः कार्याः । ते यथा—

[(लघु) षोढान्यासाः]

१. अथ गणेशन्यासः —

तरुणादित्य-सङ्काशान् गजवक्त्राँस्त्रिलोचनान् ।
पाशाङ्कुश-वराभीतिकराञ्छक्तिसमन्वितान् ॥

इति गणेशान् ध्यात्वा—

अं विघ्नेश्वराभ्यां नमः शिरसि । आं ह्रीं विघ्नराजाभ्यां नमो मुख-वृत्ते । इं तुष्टिविनायकाभ्यां नमो दक्षनेत्रे । ईं शान्ति-शिवोत्तमाभ्यां नमो वामनेत्रे । उं पुष्टिकृद्विघ्नकृद्भ्यां नमो दक्षकर्णे । ऊं सरस्वती-विघ्न-हर्तृभ्यां नमो वामकर्णे । ऋं रति-विघ्नराड्भ्यां नमो दक्षनासापुटे । ॠं मेधागणनायकाभ्यां नमो वामनासापुटे । लृं कान्त्येकदन्ताभ्यां नमो दक्षकपोले । ॡं कामिनीद्विदन्ताभ्यां नमो वामकपोले । एं मोहिनीगज-वक्त्राभ्यां नम ऊर्ध्वोष्ठे । ऐं जटानिरञ्जनाभ्यां नमोऽधरोष्ठे । ओं तीव्राकपर्दभृद्भ्यां नम ऊर्ध्वदन्तेषु । औं ज्वालिनी-दीर्घवक्त्राभ्यां नमः अधोदन्तेषु । अं नन्दासङ्कर्षणाभ्यां नमो मूर्ध्नि । अः सुरसावृषध्वजाभ्यां नम आस्ये ।

कं कामरूपिणीगणनाथाभ्यां नमो दक्षबाहुमूले । खं शुभ्रागजेन्द्राभ्यां नमो दक्षकूर्परे । गं जयिनीशूर्पकर्णाभ्यां नमो दक्षमणिबन्धे । घं सत्यात्रि-

नेत्राभ्यां नमो दक्षकराङ्गुलिसन्धौ । ङं विघ्नेशीलम्बोदराभ्यां नमो दक्षकराङ्गुल्यग्रेषु ।

चं सुरूपिणीमहानादाभ्यां नमो वामबाहुमूले । छं कामदाचतुर्मूर्त्तिभ्यां नमो वामकूर्परे । जं मदविह्वलासदाशिवाभ्यां नमो वाममणिबन्धे । झं विकटाऽऽमोदाभ्यां नमो वामकराङ्गुलिसन्धौ । ञं घूर्णादुर्मुखाभ्यां नमो वामकराङ्गुल्यग्रेषु ।

टं भूतिदा सुमुखाभ्यां नमो दक्षपादमूले । ठं भूमिप्रमोदाभ्यां नमो दक्षजानौ । डं सत्यैकपादाभ्यां नमो दक्षजङ्घायाम् । ढं रमाद्विजिह्वाभ्यां नमो दक्षपादाङ्गुलिसन्धिषु । णं मानुषीशूराभ्यां नमो दक्षपादाङ्गुल्यग्रेषु ।

तं मकरध्वजावीराभ्यां नमो वामपादमूले । थं विवर्णाषण्मुखाभ्यां नमो वामजानौ । दं भ्रुकुटीवरदाभ्यां नमो वामजङ्घायाम् । धं लज्जावामदेवाभ्यां नमो वामपादाङ्गुलिसन्धिषु । नं दीर्घघोणावक्रतुण्डाभ्यां नमो वामपादाङ्गुल्यग्रेषु ।

पं द्विरण्डाधनुर्धराभ्यां नमो दक्षपार्श्वे । फं यामिनी-सेनानीभ्यां नमो वामपार्श्वे । बं रात्रिग्रामणीभ्यां नमः पृष्ठे । भं चन्द्रिकामत्ताभ्यां नमो नाभौ । मं शशिप्रभाविमलाभ्यां नमो जठरे ।

यं लोलामत्तवाहनाभ्यां नमस्त्वगात्मने हृदि । रं चपलेक्षणीजटिभ्यां नमः असृगात्मने दक्षांसे । लं ऋद्धिमुण्डिभ्यां नमो मांसात्मने वामांसे । वं दुर्भगाखड्गिभ्यां नमो मेद आत्मने ककुदि । शं सुभगावरेण्याभ्यां नमः अस्थ्यात्मने दक्षकक्षे । वं शिवावृषकेतुभ्यां नमो मज्जात्मने वामकक्षे । सं दुर्गाभक्ष्यप्रियाभ्यां नमः शुक्रात्मने हृदयात् पाणियुग्मान्तम् । हं कालिकामेघनादाभ्यां प्राणात्मने हृदयादिपादयोः । ळं कालकुब्जागणेशाभ्यां नमो जीवात्मने जठरे व्यापकम् । क्षं विघ्न-हारिणीगणेशाभ्यां नमः परमात्मने मुखे व्यापकं कुर्यात् ।

अत्र च गणेशवाचकं पदं प्रथमं ततः शक्तिवाचकं पदं प्रयुज्य 'विघ्नेश्वरश्रीभ्या'मित्यादि-न्यासप्रयोगं लिखन्ति केचित् । केचित् तु 'विघ्नेश्वराय श्रियै' इत्यादिव्यस्तप्रयोगं लिखन्ति । वस्तुतस्तु–

**पाशाङ्कुश-वराभीतिकरान् शक्तिसमन्वितान् ।**
**एताँस्तु विन्यसेद् देवि मातृकान्यासवत् प्रिये ॥**

इति मूले शक्तिसमन्वितोक्तेः शक्तिसमन्वितानामेव गणेशानां देवतात्वमिति। पूर्वोक्त प्रयोग`एव 'भवानीशङ्कराभ्यां दमयन्तीनलाभ्या' इतिवद् युक्तः ।

एवं स्थिते क्रमपरे 'विघ्नेश्वरस्तथा श्रीश्च विघ्न-राजस्तथा ह्रिया' तथा-'शान्तियुक्तः शिवोत्तमः' तथा 'विघ्नकृत्पुष्टियुक्तः स्यात्' तथा 'गणनाथेन संयुता कामरूपिणिके'त्यादि-ग्रन्थे व्यस्त-समस्त-प्रयोगस्तथा विपरीतो विशेषणविशेष्यभावश्च प्रतीयते यद्यपि, तथापि क्रमप्रदर्शनस्य केनचिद् रूपेण विवक्षितत्वान्न पूर्वोक्तोपक्रमस्थितशक्त्यन्वितत्वबाध इति मम भाति। इति **गणेशन्यासः** ।

**२. अथ ग्रहन्यासः –**

रक्तश्वेत-रक्तश्याम-पीत-पाण्डुर-धूम्रकृष्ण-कृष्णधूम्र-धूम्रवर्णान् सर्वाभरणभूषितान् नवग्रहान् रव्यादीन् ध्यात्वा–"अं १५ अर्काय नमो हृदि । यं ३ शशिने॰ भ्रूमध्ये । कं ४ भौमाय॰ नेत्रत्रये । चं ४ ज्ञाय॰ हृदधः । टं ४ बृहस्पतये॰ हृदयोपरि । तं ४ भृगवे॰ गले । पं ४ शनये॰ नाभौ । शं ४ राहवे॰ वक्त्रे । ळं केतवे नमो गुदे ।" इति न्यसेत् ।

अत्र मूले रव्यादीनां वामोरुन्यस्तदक्षकर-वरप्रदत्वध्यानं तथा वराभयप्रद-रेणुका। अमृता। धात्री । शङ्खिनी । शाङ्करी। ज्ञाना । शक्तिः । कृष्णा । धूम्राम्बादेवी-साहित्यं बहुषु पुस्तकेषु न लभ्यत इति मया नोक्तम् । सम्प्रदायाभिज्ञैस्तु लिखितं पद्धति-पुस्तकेषु तेनानुमीयते प्रायो मूलग्रन्थस्तुटितोऽथवा तन्त्रान्तरसिद्धं कृत्वा तैर्लिखितमिति ध्येयम् । इति **ग्रहन्यासः**।

**३. अथ नक्षत्र-न्यासः –**

ज्वलत्कालाग्निसङ्काशान् सर्वाभरणभूषितान् नतिहस्तान् वरदाभयकरान् नक्षत्रान् ध्यात्वा–

"अं आं अश्विन्यै नमो ललाटे । इं ईं भरण्यै नमो दक्षनेत्रे । उ ऊं कृत्तिकायै॰ वामनेत्रे । ऋं ॠं लृं ॡं रोहिण्यै॰ दक्षकर्णे । एं मृगशीर्षाय॰ वामकर्णे । ऐं आर्द्रायै॰ दक्षनासापुटे । ओं औं पुनर्वसवे॰ वामनासापुटे । कं पुष्याय॰ कण्ठे । खं गं आश्लेषायै॰ दक्षस्कन्धे । घं ङं मघायै॰ वामस्कन्धे। चं पूर्वाफाल्गुन्यै॰ दक्षकूर्परे। छं जं उत्तराफाल्गुन्यै॰ वामकूर्परे। झं ञं हस्ताय॰ दक्षमणिबन्धे । टं ठं चित्रायै॰ वाममणिबन्धे । डं स्वात्यै॰ दक्षहस्ते । ढं णं विशाखायै॰ वामहस्ते । तं थं दं अनुराधायै॰ नाभौ । धं ज्येष्ठायै॰ दक्षकट्याम् । नं पं फं मूलाय॰ वामकट्याम् । बं पूर्वाषाढायै॰ दक्षोरौ । भं उत्तराषाढायै॰ वामोरौ । मं श्रवणाय॰ दक्षजानुनि । यं रं धनिष्ठायै॰ वामजानुनि । लं शततारकायै॰ दक्षजङ्घायाम् । वं शं

पूर्वाभाद्रपदायै॰ वामजङ्घायाम् । षं सं हं उत्तराभाद्रपदायै॰ दक्षिणपादे । क्षं अं अः रेवत्यै॰ वामपादे" । **इति नक्षत्रन्यासः ।**

अत्र क्षकारेण ततो बिन्दु-विसर्गाभ्यां च रेवतीं वामपादे च विन्यस्य योगिनीन्यासमाचरेदिति मूले लकारं विहायैव क्षकार-बिन्दु-विसर्गैस्त्रिभिरेव न्यासविधानाद् वक्ष्यमाण-पञ्चाशत्पीठन्यासेषु इह तावताऽपि बाधकाभावान्न ळकारसाहित्यं त्रिषु वर्णेष्वित्येवं सिद्धेऽर्थे यत् पद्धतिकाराणां ळं क्षं अं अः लिखनं तन्निर्मूलमिति ज्ञेयम् ।

**४. अथ योगिनी-न्यासः –**

सितासितारुण-बभ्रु-चित्र-पीतवर्णाश्चतुर्भुजाश्चतुर्वदनाः सर्वाभरण-भूषिताः षड्योगिनीर्ध्यात्वा–"डा डीं डमलवरयूं डाकिन्यै नमो ह्रीं श्रीं अं १५ मां रक्ष रक्ष नमो विशुद्धचक्रे षोडशदले कण्ठे । रां रीं रमलवरयूं राकिन्यै नमो ह्रीं श्रीं कं १२ मां रक्ष रक्ष नमो हृदयकमलेऽनाहते द्वादशदले । लां लीं लमलवरयूं लाकिन्यै नमो ह्रीं श्रीं डं ९ मां रक्ष रक्ष नमो दशदले मणिपूरे नाभौ । कां कीं कमलवरयूं काकिन्यै नमो ह्रीं श्रीं षं ५ मां रक्ष रक्ष नमः स्वाधिष्ठानेऽष्टदले लिङ्गदेशे । सां सीं समलवरयूं साकिन्यै नमो ह्रीं श्रीं वं ३ मां रक्ष रक्ष नमो मूलाधारे चतुर्दले । हां हीं हमलवरयूं हाकिन्यै नमो ह्रीं श्रीं हं क्षं नमो मां रक्ष रक्ष नमो ब्रह्मरन्ध्रे ।"

डाकिन्यादि-मन्त्रास्तूद्धृता मूले–

**डां डीं बीजद्वयं चोक्त्वा डमला वरया प्रिये ।**
**वामकर्णेन्दुनादाढ्या डाकिन्यै नम इत्यपि ॥**
**ह्रीं श्रीं स्वरान्ते वक्तव्यं मान्ते रक्ष-पदद्वयम् ।**
**त्वगात्मने कण्ठदेशे विशुद्धौ विन्यसेत् प्रिये ॥**
**कठ-वर्णे राकिनीं तु रकरेत्यक्षरैः क्रमात् ।**
**पूर्ववद् बीजसंयुक्तैरसृगात्मा तु संवदेत् ॥**
**अनाहते न्यसेत् पश्चात् डकारादि-फकारगैः ।**
**लाकिनीं च ततो देवी मांसात्ममणिपूरके ॥**
**ब-ल-वर्णैः काकिनीं तु स्वाधिष्ठाने तथाविधाम् ।**
**मेदःस्वरूपां विन्यस्य व-सवर्णैस्तु साकिनीम् ॥**
**अस्थिरूपां च पूर्वोक्त-बीजकक्षां प्रविन्यसेत् ।**
**हक्षवर्णस्थितां तद्वद्धाकिनीकां न्यसेत् क्रमात् ॥**
**ब्रह्मरन्ध्रे महेशानि न्यासोऽयं योगिनीयुतः ॥** इति ।

स्पष्टार्थमेतत् । अन्यत्र च शक्राधिष्ठात्रीं याकिनीं ब्रह्मरन्ध्रे मज्जाधिष्ठात्रीं हाकिनीं भ्रूमध्य इति न्यासं कुर्वन्ति केचित् । वस्तुतस्तु–

सितासिताऽरुण-बभ्रु-चित्र-पीताश्च चिन्तयेत् ।
चतुर्भुजाः समैर्वक्त्रैः सर्वाभरण-भूषिताः ॥

इति मूलोपक्रमे षण्णामेव वर्णानामुक्तेरग्रे सप्तम्या यामिन्या अनुक्तेश्च सुभगार्चा-रत्नादिषु तथैव प्रयोगदर्शनाच्च षण्णामेव न्यासो न तु सप्तम्या याकिन्या न्यासः प्रमाणाभावादिति । अत्र च मूले त्वगात्मने । अस्थ्यात्मा तु संवदेदित्यादि-पदसूचितास्त्वगात्मानं मां रक्ष रक्ष, असृगात्मानं मां रक्ष रक्ष, मांसात्मानं मां रक्ष रक्ष, मेद आत्मानं मां रक्ष रक्ष, अस्थ्यात्मानं मां रक्ष रक्षेत्यादिप्रयोगाचार्या इति गुरु-सङ्केतः ।' 'रक्ष रक्ष नमः' इति नमप्रयोगस्तु 'अं नमः' इतिवत् सर्वत्र सिद्ध एव । मा इत्यस्मच्छब्दस्य द्वितीयैकवचनस्य माऽऽदेशे रूपम् ।

**५. अथ राशिन्यासः –**

रक्त-प्रश्वेत-हरित-पाण्डु-चित्र-कृष्ण-पिशङ्ग-पिङ्गल-बभ्रु-कर्बुर-कृष्ण-धूम-वर्णान् मेषादि-राशीन् ध्यात्वा–"अं आं इं ईं मेषाय नमो दक्षगुल्फे । उं ऊं वृषभाय नमो दक्षजानौ । ऋं ॠं लृं लॄं मिथुनाय नमो दक्षवृषणे । एं ऐं कर्कटाय नमो दक्षकुक्षौ । ओं औं सिंहाय नमो दक्षस्कन्धे । अं अः शं सं कन्यायै नमो दक्षिणशिरोभागे । कं ४ तुलायै नमो वामशिरोभागे । चं ४ वृश्चिकाय नमो वामस्कन्धे । टं ४ धनुषे नमो वामकुक्षौ । तं ४ मकराय नमो वामवृषणे । पं. ४ कुम्भाय नमो वामजानौ । यं ३ क्षं मीनाय नमो वामगुल्फे । इति राशिन्यासः ।

**६. अथ पीठ-न्यासः –**

सितासितारुणश्याम-हरित्पीतान्यनुक्रमात् ।
पुनः पुनः क्रमाद् ध्यायेत् पञ्चाशद् वर्ण-पीठकान् ।

इति ध्यात्वा–

अं कामरूपपीठाय नमः शिरसि । आं वाराणसीपीठाय॰ मुखवृत्ते । इं नेपालपीठाय॰ दक्षनेत्रे । ईं पौण्ड्रवर्द्धनपीठाय॰ वामनेत्रे । उं काश्मीर-पीठाय॰ दक्षकर्णे । ऊं कान्यकुब्जपीठाय॰ वामकर्णे । ऋं पूर्णशैलपीठाय॰ दक्षनासापुटे । ॠं अर्बुदपीठाय॰ वामनासापुटे । लृं आम्रातकेश्वरपीठाय॰ दक्षकपोले । लॄं एकाम्रपीठाय॰ वामकपोले । एं त्रिस्रोतःपीठाय॰ ऊर्ध्वोष्ठे । ऐं कामकोटपीठाय॰ अधरोष्ठे । ओं कैलासपीठाय॰ ऊर्ध्वदन्तपङ्क्तौ । औं

भृगुपीठाय॰ अधोदन्तपङ्क्तौ । अं केदारपीठाय॰ मूर्ध्नि । अः चन्द्रपुर-पीठाय॰ आस्ये। कं श्रीपीठाय॰ दक्षबाहुमूले। खं ओङ्कारपीठाय॰ दक्षकूर्परे। गं जालन्धरपीठाय दक्षमणिबन्धे । घं मालवपीठाय॰ दक्षकराङ्गुलिसन्धौ । ङं कुलान्तकपीठाय॰ दक्षकराङ्गुल्यग्रेषु। चं देवीकोटपीठाय॰ वामबाहुमूले । छं गोकर्णपीठाय॰ वामकूर्परे । जं मारुतेश्वरपीठाय॰ वाममणिबन्धे । झं अट्टहासपीठाय॰ वामकराङ्गुलिसन्धौ। ञं विरजापीठाय॰ वामकराङ्गुल्यग्रेषु । टं राजगृहपीठाय॰ दक्षपादमूले । ठं महापथपीठाय॰ दक्षजानौ । डं कोल्लापुरपीठाय॰ दक्षजङ्घायाम्। ढं एल्लपुरपीठाय॰ दक्षपादाङ्गुलिसन्धौ। णं कालेश्वरपीठाय॰ दक्षपादाङ्गुल्यग्रेषु। तं जयन्तिकापीठाय॰ वामपादमूले। थं उज्जयिनीपीठाय॰ वामजानौ । दं चरित्रपीठाय॰ वामजङ्घायाम् । धं क्षीरान्तकपीठाय॰ वामपादाङ्गुलिसन्धौ । नं हस्तिनापुरपीठाय॰ वामपादा-ङ्गुल्यग्रेषु । पं उड्डीशपीठाय॰ दक्षपार्श्वे । फं प्रयागपीठाय॰ वामपार्श्वे । बं षष्ठीशपीठाय॰ पृष्ठे । भं मायापुरपीठाय॰ नाभौ । मं जलेश्वरपीठाय॰ जठरे । यं मलयपीठाय॰ हृदि । रं श्रीशैलपीठाय॰ दक्षांसे । लं मेरुगिरि-पीठाय॰ वामांसे । वं महेन्द्रपुरपीठाय॰ ककुदि । शं वामनपुरपीठाय॰ दक्ष-कक्षे । षं हिरण्यपुरपीठाय॰ वामकक्षे । सं महालक्ष्मीपुरपीठाय॰ हृदयात् पाणियुग्मान्तम् । हं उड्याणपीठाय॰ हृदयादिपादयोः । ळं छायाछत्रपुर-पीठाय॰ जठरे व्यापकं कुर्यात् ।

अत्र पूर्वोक्त-मातृकास्थानेष्विवैकपञ्चाशद्वर्णानां न्यासाय तं प्रणव-पीठायेत्याद्यधिकमेकं पीठं वामपादमूले विन्यस्य तेनैव क्रमेणैकपञ्चाशत् पीठन्यासं कुर्वन्ति । तत्र–

**'कालेश्वरं महापीठं महापीठं जयन्तिका'** इति मूले द्वितीय-महापीठशब्दे प्रणवं चेति पाठं प्रकल्प्य मूलग्रन्थमपि प्रमाणं कल्पयन्ति केचित् । केचित् तु 'क्षं छायाछत्रपुरपीठाये'ति न्यासं ळकारं कुर्वन्ति । मम तु प्रतिभाति । **'ब्रह्माण्ड-पुराणे'**–

**'ततः पीठानि पञ्चाशदेकं चक्रमथो न्यसेत्' । इत्यारभ्य–**

**परोड्याणं तथा छायाछत्रमाहुर्मनीषिणः ।**

**लिपिक्रमसमायुक्तान् लिपिस्थानेषु विन्यसेत् ॥**

इत्यन्तेनैव क्रमेणैकपञ्चाशत्पीठन्यासोक्तावपि 'ज्ञानार्णवे' पञ्चाशत्स्थान-सञ्चयानित्यनुक्रमात् पञ्चाशत्पीठविन्यासं मातृकायाः स्थले विन्यसेदित्युप-संहारात् । 'प्राणेश्वरी प्राणधात्री पञ्चाशत्पीठरूपिणी' इति सहस्रपाठे

पञ्चाशत्पीठरूपत्वेन सङ्कीर्तनाच्च क्रमेण पञ्चाशद्वर्णात्मकपञ्चाशत्पीठ-न्यास एव युक्तः। ततश्च क्रमेण ळकारान्तन्यासे कृतेऽर्थादन्तिमः क्षकार एव लुप्यते यावद् वचनदर्शनम्। यद्वा–

'मातृकार्णैर्न्यसेद् देवि ग्रहन्यासस्ततो न्यसेत्' इति ग्रहन्यासवद् 'मातृ-कार्णैर्न्यसेद् देवि मातृकावत् सदाऽनघे' इति वक्ष्यमाणकामरतिन्यासवच्चात्र मातृकार्णानां साधनत्वाश्रवणात् पञ्चाशन्मातृकास्थानेषु केवलं पीठानि तावन्ति न्यसितव्यानीत्यर्थे सिद्धे तावद् वर्णसमूहलोपेऽपि न क्षतिरिति। इति षोढान्यासः।

**अथ कामरति-न्यासः –**

दाडिमीकुसुमप्रभान् पुष्प-बाणेषुकार्मुकान् कुङ्कुमाभसर्वाभरण-नीलोत्पलकर-कान्तायुतवामाङ्गान् कामान् ध्यात्वा–

अं रति-कामेश्वराभ्यां नमः शिरसि। आं प्रीति-कामाभ्यां॰ मुखवृत्ते। इं कामिनी-कान्ताभ्यां दक्षनेत्रे। ईं मोहिनीभ्रान्तिमद्भ्यां कामनेत्रे। उं कमला-कामघ्नाभ्यां॰ दक्षकर्णे। ऊं विलासिनी-कामचाराभ्यां॰ वामकर्णे। ऋं कल्पलता-कर्णाभ्यां॰ दक्षनासापुटे। ॠं श्यामला-कोमलाभ्यां॰ वामनासा-पुटे। ऌं शुचिस्मिता- कामवर्द्धकाभ्यां॰ दक्षकपोले। ॡं विस्मया-कामाभ्यां॰ वामकपोले। एं विशाली-रमाभ्यां॰ ऊर्ध्वोष्ठे। ऐं लेलिहारमणाभ्यां॰ अधरोष्ठे। ओं दिगम्बरा-रतिनाथाभ्यां॰ ऊर्ध्वदन्तेषु। औं वामा-रतिप्रियाभ्यां॰ अधोदन्तेषु। अं कुब्जिका-रात्रिनाथाभ्यां॰ मूर्द्धनि। अः कान्ता-स्मराभ्यां॰ आस्ये। कं सूया-(नित्या)रमणाभ्यां॰ दक्षबाहुमूले। खं कल्याणी-निशाकराभ्यां॰ दक्षकूर्परे। गं भोगिनी-नन्दनाभ्यां॰ दक्षमणिबन्धे। घं कामदा-नन्दी-शाभ्यां॰ दक्षकराङ्गुलिसन्धिषु। ङं सुलोचना-वामनाभ्यां॰ दक्षकराङ्गुल्यग्रेषु। चं सुलावण्यानन्दयितृभ्यां॰ वामबाहुमूले। छं मर्दिनी-निशाचराभ्यां॰ वामकूर्परे। जं कलहप्रिया-रतिहंसाभ्यां॰ वाममणिबन्धे। झं काङ्क्षिणी-पुष्पधनुर्भ्यां॰ वामकराङ्गुलिसन्धिषु। ञं सुमुखी-महाधनुर्भ्यां॰ वामकराङ्गुल्यग्रेषु। टं नलिनी-ग्रामणीभ्यां॰ दक्षपादमूले। ठं जटिनी-भीमाभ्यां॰ दक्षजानौ। डं पालिनी-भ्रामणाभ्यां॰ दक्षजङ्घायाम्। ढं शङ्खिनी-भ्रामणाभ्यां॰ दक्षपादाङ्गुलिसन्धिषु। णं मुग्धा-कामाभ्यां॰ दक्षपादाङ्गुल्यग्रेषु। तं रमा-भ्रामणीभ्यां॰ वामपादमूले। थं भूमाभृगुभ्यां॰ वामजानौ। दं चामरलोला-भ्रान्ताभ्यां॰ वामजङ्घायाम्। धं सुचञ्चला-भ्रमावहाभ्यां॰ वाम-पादाङ्गुलिसन्धिषु। नं दीर्घ-जिह्वा-मोहनाभ्यां॰ वामपादाङ्गुल्यग्रेषु। पं

रतिप्रिया-मोचकाभ्यां॰ दक्षपार्श्वे । फं लोलाक्षी-मुग्धाभ्यां॰ वामपार्श्वे । बं भृङ्गिणी-मोहवर्द्धनाभ्यां॰ पृष्ठे । भं चपेटा-मोहकाभ्यां॰ नाभौ । मं नाथमन्मथाभ्यां॰ जठरे । यं याकिनी-मातङ्गाभ्यां॰ हृदि । रं कलहंसिनी-भृङ्गिभ्यां॰ दक्षांसे । लं विश्वतोमुखी-गायकाभ्यां॰ वामांसे । वं जगदानन्दिका-गीतज्ञाभ्यां॰ ककुदि । शं रञ्जिनी-नर्तकाभ्यां॰ दक्षकक्षे । षं कान्ति-लोलाभ्यां॰ वामकक्षे । सं कलकण्ठी-उन्मत्ताभ्यां॰[1] हृदयात् पाणियुग्मान्तम् । हं वृकोदर्यामलकाभ्यां॰ हृदयादिपादयोः । ळं श्यामा-मेघाभ्यां॰ जठरे । क्षं श्री-विमलाभ्यां नमो मुखे व्यापकम् ।

अत्रापि गणेशन्यासवच्छक्ति-सहितानामेव देवतात्वं द्रष्टव्यम् ।

**अथ नवयोनि-न्यासः –**

तत्र यथा पञ्चदशी-न्यासप्रसङ्गे एकैककूटेन कर्णद्वय-चिबुक-शङ्खद्वय-मुख-नेत्रद्वय-नासा-बाहुयुग्म-हृदय-कूर्परद्वय-कुक्षि-जानुद्वय-अन्धु-पादद्वय-गुह्य-पार्श्वद्वय-हृदय-स्तनद्वय-कण्ठ-स्थानेषु न्यास उक्तस्तथैव षोडश्यां तेष्वेव स्थानेषु बालया कार्यः। एवं बहिर्न्यासं कृत्वाऽन्तर्नवयोनिन्यासं कुर्यात् ।

**[ अन्तर्नवयोनि-न्यासः ]**

मूलाधार-स्वाधिष्ठान-मणिपूरानाहत-विशुद्धाज्ञाचक्र-ललाट-सीमन्त-ब्रह्मरन्ध्रेषु नवसु स्थानेषु चतुरस्रावृताः नवयोनीः स्वाभिमुखाः परिकल्प्य स्वाग्रादि-प्रादक्षिण्यक्रमेण बालाबीजत्रयं मनसा ध्यायंस्तत्तद् बाह्याङ्गं स्पृशेदिति । अत्र च–

**बालया त्रिपुरेशान्या नवयोन्यङ्कितं न्यसेत् ।**
**श्रोत्रयोश्चिबुके चैव शङ्खास्येषु दृशोर्नसि ॥**

इत्यादिवचनं षोडश्यां बीजत्रयाभावाद् बालातिदेशाप्राप्तेः प्राकृतस्थाना-पत्त्यभावाच्चाप्राप्तबालाबीजत्रय-करणक-न्यास-विधायकत्वेन सार्थकं ज्ञेयम्। तत्रापि बालाबीजत्रयेणैव न्यास इति 'सौभाग्यरत्नाकर- कारादयः । पञ्च-दशीकूटत्रयेण न्यास इति 'सुभगार्चारत्न'-कृतः ।

मम तु भाति यत्– 'त्रिपुरेशान्या नवयोन्यङ्कितं तद्-बालये'त्युद्देश्य-विधेयभावेन बालाबीजत्रयेणैव न्यास इति युक्तम् । अत एवाग्रे अन्तर्नव-योनिन्यास-प्रतिपादकेषु–

---

1. मातृकायामत्र चापबन्धन्यां दर्शितः पाठो नास्ति । सम्भाव्यते स हि प्रतिलिपिकारस्यैव तत्र विस्मृतिरस्तीति ।

पुनर्बालां समुच्चार्य चतुरस्रं विचिन्तयेत् ।
गोलकन्याय-योगेन श्रीचक्रं परिचिन्तयेत् ॥
षट्चक्रेषु ललाटे च सीमन्ते च शिरोबिले ।
नवस्थानानि सङ्कल्प्य न्यसेद् देवि ततः परम् ॥

इत्यस्याग्रे—

श्रीविद्यां ब्रह्मरन्ध्रे तु पृष्ठतो गुरवः क्रमात् ।

इति संहारसृष्टि-स्थितिरूप-त्रिविधचक्रन्यासान्तर्गत-सृष्टिन्यास-प्रतिपादक-तन्त्रान्तरीय-श्लोकार्धमात्रं केनचिद् भ्रान्तेन लिखितम् । अग्रे च—

तिथिनित्यास्ततो देवि मातृकास्वरसंयुताः ।
मातृकावन्न्यसेद् देवि वक्त्रे सौभाग्यदायिनीः ॥
'शृणु देवि प्रवक्ष्यामि नित्यामण्डलमुत्तमम्' । इति ।
'आद्यःस्वरे परेशानि श्रीविद्यां विश्वमातृकाम् ।
स्वरवद् विन्ससेन्नित्यां नीरजायतलोचने ॥'

इत्यन्तेन ग्रन्थेन षोडशस्वरस्थानेषु षोडश-नित्यान्यासो विधीयते । अग्रे च—

'प्रकटाद्या न्यसेत् पश्चादाधारादिषु मन्त्रवित्' । इत्यनेन त्रैलोक्यमोहनादि-चक्रन्यासपूर्वकः प्रकटयोगिनीन्यास आधारादिषु पूर्वोक्तनवचक्रेषु विधीयत इति ज्ञेयम् ।

यत्तु नवयोनिन्यासानन्तरं पुनर्बालां समुच्चार्य चतुरस्रमिति श्लोकद्वयेन तूष्णीं चतुरस्रचिन्तनम् । गोलकपदवाच्य-वृत्त-चिन्तनमात्रं च कर्तव्यतया विधीयते—

'नवस्थानानि सङ्कल्प्य न्यसेद् देवि !' इत्यनेन 'प्रकटाद्या न्यसेत् पश्चादा-धारादिषु मन्त्रवित्' इत्यनेन नवचक्रन्यासपूर्वकः चक्रदेवतान्यासो विहित इति केषाञ्चित् प्राचीनपद्धतिकाराणामभिप्रेतं तन्मान्यमेव, न तु ग्रन्थार्थ-सम्मतम् ।

श्रीचक्रस्य पूजाक्रमेण विभावनया तत्तद्देवतान्यासेऽभिप्रेते सति—'श्रीविद्यां ब्रह्मरन्ध्रे तु पृष्ठतो गुरवः क्रमात्' इत्यनेन न्यासक्रमादरणेन पूजाक्रमबाधापत्तेः । न हि प्रधानपूजानन्तरं गुरुमण्डलपूजनं नित्यामण्डल-पूजाऽतः प्रागस्ति । येन गुरुमण्डलन्यासानन्तर्यं नित्यामण्डलन्यासे विहित-मुचितं दृश्येत । किञ्च, नित्यामण्डलस्यापि बिन्दुचक्र एव परितो विभावितत्रिकोणे पूजाकथनात् तत्रैव न्यासौचित्ये षोडशस्वरस्थानेषु मुखे

न्यासकथनमसङ्गतार्थमिवापद्येत । नवयोनिन्यासानन्तरं चतुरस्रवृत्तचिन्तनं च व्यर्थमेवेति दिक् ।

तस्मान्मदुक्तप्रकार एव साधीयान् । अत एव 'सौभाग्यरत्नाकर'-'सुभगार्चारत्न'-कारादिभिरन्तश्चतुरन्तश्चतुरस्रावृत्ता नवयोनीः प्रकल्प्य बालया न्यासा उक्तास्ते मदुक्तव्याख्यानपूर्वोक्त-मूल-ग्रन्थमूला दृश्यन्ते । 'तन्त्रसारे' च–

'श्रीविद्यां ब्रह्मरन्ध्रे तु पृष्ठतो गुरवः क्रमात्' इत्यर्धं परित्यज्यैव 'तिथि-नित्यास्ततो देवि' इत्यादिना षोडशनित्यान्यासाः 'प्रकटाद्या न्यसेत् पश्चात्' इत्यनेन विहिताः प्रकटयोगिनीन्यासाः इति स्पष्टमेव चक्रकल्पनानिरपेक्षः स्वतन्त्रो नित्यान्यासः । प्रकटादि-योगिनीन्यासश्चोक्तः । तस्मादन्तर्नव-योनिन्यासानन्तरं 'षोडशनित्यान्यासो' यथा–

**[अथ षोडशनित्यान्यासः ]**

वक्ष्यमाणान् नित्यामन्त्रान् प्रत्येकमुच्चार्य, अं कामेश्वर्यै नित्यायै नमो मस्तके । आं भगमालिनीनित्यायै॰ मुखवृत्ते । इं नित्यक्लिन्नानित्यायै॰ दक्षनेत्रे । ईं भेरुण्डानित्यायै॰ वामनेत्रे । उं वह्निवासिन्यै॰ दक्षकर्णे । ऊं महाविद्येश्वर्यै॰ वामश्रोत्रे । ऋं शिवादूत्यै॰ दक्षनासापुटे । ॠं त्वरितायै॰ वामनासापुटे । लृं कुलसुन्दर्यै॰ दक्षगण्डे । लॄं नित्यानित्यायै॰ वामगण्डे । एं नीलपताकानित्यायै॰ ऊर्ध्वोष्ठे । ऐं विजयानित्यायै॰ अधरोष्ठे । ओं सर्वमङ्गलायै॰ ऊर्ध्वदन्तेषु । औं ज्वालामालिनीनित्यायै॰ अधोदन्तेषु । अं चित्रानित्यायै॰ मूर्ध्नि । अः श्रीमहात्रिपुरसुन्दरीनित्यायै नम आस्ये । इति ।

ततो मूलाधार-स्वाधिष्ठान-मणिपूरानाहत-विशुद्धाज्ञा-ललाट-सीमन्त-शिरोबिलेषु नवसु स्थानेषु त्रैलोक्यमोहनचक्राय नम इत्येवं त्रैलोक्यमोहन-सर्वाशापूरक-सर्वसंक्षोभण-सर्वसौभाग्यदायक-सर्वार्थसाधक-सर्वरक्षाकर-सर्वरोगहर-सर्वसिद्धिप्रद-सर्वानन्दमय-चक्राणि क्रमेण विन्यस्य तेष्वेव प्रकट-योगिनीभ्यो नम इत्येवं प्रकट-गुप्त-गुप्ततर-सम्प्रदाय-कुल-कौल-निगर्भ-रहस्यातिरहस्य-परापरातिरहस्ययोगिनीर्विन्यसेत् ।

अत्र च 'अं आं सौस्त्रैलोक्यमोहनचक्रस्थप्रकटयोगिनीभ्यो नमः' इत्यादि-प्रयोगास्तु 'सौभाग्यरत्नाकर-सुभगार्चारत्न'-कारादिभिरुक्ताः । समष्टिपूजाभिप्रायेण 'प्रकटयोगिनीभ्यो नमः' इति प्रयोगस्तु तन्त्रसारे उक्त इति । मन्त्रवित्पदसूचितश्चक्रकल्पनासहितः पूजाक्रमेण व्यस्तः प्रत्येकं न्यासप्रकारस्तु युक्तः च गुरुमुखादवधेयः ।

अस्तु वा निरुपपत्तिकमेव 'श्रीविद्यां ब्रह्मरन्ध्रे' इत्यस्यार्धस्य प्रामाण्यं तावतास्त्वन्तर्नवयोनिन्यास-षोडशनित्यान्यासान्तराले श्रीविद्यान्यासपूर्वक-स्वतन्त्रगुरुन्यासप्रतिपादकत्वं तस्येति ज्ञेयम् । तदा च ब्रह्मरन्ध्रपृष्ठभागे वक्ष्यमाण-गुरुमण्डल-पूजाक्रमेण त्रिरेखासु दिव्यौघ-सिद्धौघ-मानवौघान् त्रीन् विन्यसेदिति सिद्धम् ।

**अथ श्रीविद्यासृष्टिन्यासः –**

श्रीं नमः ब्रह्मरन्ध्रे । ह्रीं॰ अलिके । क्लीं॰ नेत्रयोः । ऐं॰ श्रोत्रयोः । सौः॰ घ्राणयोः । ॐ॰ ओष्ठयोः । ह्रीं॰ दन्तपङ्क्त्योः । श्रीं॰ तालौ । क ४॰ जिह्वायाम् । ह ५॰ गलकूपके । स ३॰ पृष्ठे । सौः॰ सर्वाङ्गे । ऐं॰ हृदि । क्लीं॰ स्तनयोः । ह्रीं॰ कुक्ष्योः । श्रीं॰ लिङ्गे । सम्पूर्णां व्यापकत्वेन विन्यसेत् सर्वाङ्गे ।

अत्र ऊ॰ गण्डयोः । श्रीं॰ ओष्ठयोरिति लिखन्ति, तत्–

**ब्रह्मरन्ध्रालिके नेत्र-श्रुति-घ्राणोष्ठकेषु च ।**
**दन्तान्तरोर्ध्वके देवि जिह्वायां गलकूपके ॥**
**पृष्ठ-सर्वाङ्ग-हृदय-स्तन-कुक्षिषु लिङ्गके ।**

इति मूलविरोधादुपेक्ष्यम् । संहितायामपि–

**दन्तान्तरोर्ध्वयोर्देवि जिह्वायां चोरकूपके ।**

इति पाठः । अन्तरोर्ध्वपदेन मुखान्तर्वर्त्तितालुभागो गृह्यते ।

**अथ श्रीविद्या-स्थितिन्यासः–**

श्रीं॰ अं॰/ह्रीं॰ त॰/क्लीं॰ म॰/ऐं॰ अ॰/सौः॰ कण्ठे/ॐ ब्रह्मरन्ध्रे ।
ह्रीं॰ मुखे/श्रीं॰ हृदि/क ४॰ नाभ्यादि-पादान्तम् । ह ५ गलादि-नाभ्यन्तम् । स. ३ ब्रह्मरन्ध्रादि-कण्ठान्तम् । सौः॰ पादाङ्गुष्ठयोः । ऐं॰ पादतर्जन्योः । क्लीं॰ पादमध्यमयोः । ह्रीं॰ पादानामिकयोः । श्रीं॰ पादकनिष्ठिकयोः । इति स्थितिन्यासं कुर्यात् ।

यद्यप्यत्र मूले स्थितिन्यासानन्तरं सृष्टिन्यास उक्तस्तथापि, अर्थक्रमेण पाठक्रमं बाधित्वा सृष्टिन्यासानन्तर्यमेव स्थितिन्यासस्य द्रष्टव्यम् । अत एव सौभाग्यरत्नाकरकृताऽयमेव क्रम आदृतः । इति 'ज्ञानार्णव'मात्रोक्ताः श्रीविद्यान्यासाः ।

एतदुत्तरं च शक्तौ सत्यां संहितोक्तः पञ्चविधो न्यासः कार्यः । तदुक्तं संहितायाम्–

कानानाक्षि-श्रुति-घ्राण-गण्डोष्ठेषु मुखान्तरे ।
दन्तयोर्वदने वर्णान् न्यसेत् सौभाग्यहेतवे ॥
क-सीमन्त-ललाटेषु भ्रूयुगे घ्राण-वक्त्रयोः ।
कर-सन्धिषु साग्रेषु षोडशार्णान् क्रमान्न्यसेत् ॥

इति द्वितीयः । तथा–

शिरो-ललाट-दृग्वक्त्रे जिह्वा-पत्सन्धि-कोटिषु ।
षोडशार्णान् न्यसेत्........................................ ॥

इति तृतीयः । तथा–

वक्त्रे स्वर-स्थानेषु च क्रमात् ।

इति चतुर्थः । तथा–

ललाट-गल-हृन्नाभि-मूलाधारेषु पञ्चकम् ।
ब्रह्मरन्ध्रे मुखे बस्तौ बीजत्रयमथो न्यसेत् ॥
आधारे हृदये ब्रह्मरन्ध्रे बीजत्रयं ततः ।
कर-पादेषु हृदये पञ्च बीजानि विन्यसेत् ॥
व्यापकं गोलकं कुर्यान्महासौभाग्यहेतवे ॥

इति पञ्चमः । एवं न्यासपञ्चकं मिलितमेको न्यास इति सर्वे ।

अत्र 'व्यापकं गोलकं कुर्यान्महासौभाग्ये'ति संहितायां 'स्वतन्त्रगोलकन्यासो विधीयते' इति मम भाति । तत्प्रकारस्तु गुरुमुखाज्ज्ञातव्यः । न्यास-प्रकारोऽपि संहितायामुक्तः–

पुष्पैर्वाऽनामया वाऽपि मनसा वा न्यसेदणु( मु )म् । इति ।

अत्र च देवता-शरीरन्यासे पुष्पैः स्वशरीरन्यासे–अङ्गुष्ठयुक्तयाऽनामया स्वशरीरान्तन्यासं मनसेत्येवं व्यवस्थितविकल्पार्थो 'वा'शब्दो वचनान्तराद् द्रष्टव्यः ।

॥ इति श्रीरामानन्दशिष्य-शङ्करानन्दनाथ-कृते
'सुन्दरी-महोदये' न्यासादि-
खण्डस्तृतीयोल्लासः[1] ॥



1. अत्र 'श्रीमद् दिव्य लक्ष्मीनृसिंहार्पणमस्तु' इति पाठोऽधिकः ।

## ॥ अथ नित्यपूजाविधिर्नाम चतुर्थोल्लासः ॥

**[ मुद्रा-पूर्वकमन्तर्यागः ]**

श्रीः । ततः प्राणानायम्य 'द्रां द्रीं क्लीं ब्लूं सः क्रौं हस्ख्फ्रें ह्सौं ऐं' इति बीजानि संस्मरन् संक्षोभ-द्रावणाकर्ष-वश्योन्मादमहाङ्कुशा-खेचरी-बीज-योन्याख्या नवमुद्राः प्रदर्श्य, अन्तर्यागं कुर्यात् । मुद्रास्तु गुरु-सम्प्रदाय-तोऽवगन्तव्याः । तासां बीजान्युद्धृतानि मूले—

**पञ्चबाणैः पञ्चमुद्रा क-रोमात्मकमक्षरम् ।**
**आद्यं तु रुद्रभैरव्या बीजं सदाशिवं ततः ॥**
**केवलं वाग्भवं देवि क्रमेण च चतुष्टयम् ।**
**चतुर्मुद्रासु बीजानि नवमुद्रा नव क्रमात् ॥**

इति स्पष्टार्थम् । अन्तर्यागस्तु—

**मूलादि-ब्रह्मरन्ध्रान्तां बिसतन्तुतनीयसीम् ।**
**उद्यत्सूर्यप्रभाजाल-विद्युत्कोटिप्रभामयीम् ॥**
**चन्द्रकोटि-प्रभाद्राव-त्रैलोक्यैक-प्रभामयीम् ।**
**अशेषजगदुत्पत्ति-स्थिति-संहारकारिणीम् ॥**
**ध्यायेन्मनो यथा देवि निश्चलं जायते तथा ॥**

इति मूलकृतोक्तेः । ततो बहिर्यजनं कुर्यात् ।

अत्र च सर्वैरपि 'पीठपूजा' व्युत्क्रमेण लिख्यते । कैश्चित् तु नैव लिख्यते । तत्र—

**( तद् ) बाह्यचक्र-मध्ये तु मुद्रया हि त्रिखण्डया ।**
**संस्थितां चिन्तयेत् तत्र श्रीपीठान्तर्निवासिनीम् ॥**

इत्यनेन सत्सम्प्रदायवेद्यं पूज्यं पीठमेवमुक्तं भवति ।

चक्रमध्ये त्रिखण्डा-मुद्रया आवाह्य पूर्वोक्तश्रीपीठान्तर्निवासिनीं सतीं तत्र कामेश्वराङ्के संस्थितां चिन्तयेत् । अत एवैतत्समानार्थकं पीठोपन्यास-पूर्वकम्—

**'कामेश्वरीं शिवस्याङ्के स्थापयेत् कुलसुन्दरि ।'**

इति 'संहिता'वचनम् । कामेश्वराङ्कस्यासन-विशेषत्वं गुरु-सङ्केतगम्य-मिति तत्र-पदेन सूचितं भवति । श्रीपीठं चातिदेशप्राप्तं बाला-सम्बन्ध्येव

द्वादशशक्तिकम् । यद्यपि प्रकृतौ द्वादश-शक्तिकमेव पीठमासीदिह तु विलक्षणम् । तथा हि—

[ पीठवर्णनं पूजा च ]

अनेकब्रह्माण्डाद् बहिः सहस्रकोटियोजनविस्तीर्णाय सुधाम्बुनिधये नमः। तन्मध्ये शतकोटियोजनविस्तीर्णाय रत्नद्वीपाय०। तन्मध्ये प्रत्येकं शत-योजनोन्नतपञ्चविंशति-प्राकारेभ्यो नमः । प्रतिप्राकार-चतुर्द्वार-चिन्तामणि-गृह-चतुर्द्वार-द्विपार्श्वरूपाष्टोत्तरशतस्थानस्थितायारुणायाष्टोत्तरशतरूपेण स्थिताय सिद्धलक्ष्मीसेविताय गणेशाय०, गणेशवत् तत्तत् स्थानस्थिताय प्रकाशरूप-शक्त्याख्यछायादेव्यभिधया तेजोमयं चक्षुःपुष्पकन्दुकं च बिभ्रत्या रूपसिंहासनारूढया चक्षुष्मत्या देव्या युक्ताय रक्ताब्जासनायारक्ताय दिवाकराय०। तत्तद् रविपीठस्थायै विभातसन्देश्यै कुण्डी-जपवटीहस्तायै अरुणायै त्रिपुरागायत्र्यै०। कालायस-प्राकारचतुर्द्वारपालकाय रक्तद्वादश-शक्तियुताय दीपनायकाय०। कालायस-कांस्य प्राकारान्तरालगतनाना-वृक्षोद्यान-स्थिताय कालनायकाय०। कांस्य-ताम्रप्राकारन्तरालगत-कल्पद्रुमवनभूषितभूमिस्थिताय वसन्तर्तवे०। ताम्रसीस-प्राकारान्तरालगत-सन्तानतरु-वाटिकाधिष्ठिताय ग्रीष्मर्त्तवे०। सीस-पित्तल-प्राकारान्तरालगत-हरिचन्दनतरुवाटिकाधिष्ठिताय वर्षर्त्तवे०। पित्तलपञ्चलोह-प्राकारान्तराल-गत-मन्दार-तरुवाटिकाधिष्ठिताय शरदृतवे० । पञ्चलोह-रूप्य-प्राकारान्त-रालगत-पारिजाततरुवाटिकाधिष्ठिताय हेमन्तर्तवे०। रूप्य-सुवर्णप्राकारान्त-रालगत-कदम्बवनाधिष्ठिता श्रीदेवीमन्त्रिणी-मातङ्गीसहिताय मन्त्रिणे शिशिरर्तवे०। स्वर्ण-पुष्पराग-प्राकारान्तरालगत-पुष्परागरत्नमयतरु-वाटिकाधिष्ठिताय मृत्युञ्जयाय०। पुष्पराग-पद्मराग-प्राकारान्तरालगतपद्म-रागमणिमयतरुवाटिकाधिष्ठितायै मातृकाम्बिकायै०। पद्मराग-गोमेद-रत्न-प्राकारान्तरालगत-गोमेदरत्नमय-तरुवाटिकाधिष्ठितायै कालकर्ण्यै०। गोमेद-रत्न-हीररत्नप्राकारान्तरालगतहीररत्नमयतरुवाटिकाधिष्ठिताय धृतकह्लार-माला-कन्यका-सहितायेक्षुरथस्थिताय विश्वावसुगन्धर्वाय०। हीरमय-कनक-वैडूर्य-प्राकारान्तरालगत-वैडूर्यरत्नमय-तरुवाटिकाधिष्ठिताय शेषनागाय०। वैडूर्य-नीलमणिमय-प्राकारान्तरालगतनीलमणिमयतरुवाटिकाधिष्ठितायै अक्षस्रक्कुण्डिकाहस्तायै वेदमात्रे गायत्र्यै०। नीलमणि-मौक्तिकप्राकारान्त-रालगत-मुक्तामयवृक्षवाटिकाधिष्ठिताष्ट-दिगाश्रितेभ्यो इन्द्रादिभ्यो०। मुक्ता-मरकत-प्राकारान्तरालगत-हेमतालवनाधिष्ठितायै हल-मुसल-कपाल-

वर-करायै वाराह्यै०। मरकत-विद्रुम-प्राकारान्तरालगत-विद्रुमवनस्थिता-याक्षमाला-वराभीति-कमण्डलु-धरायाम्भोजनिषण्णायारक्ताय भारतीसखाय ब्रह्मणे०। विद्रुम-माणिक्य-प्राकारान्तरालगतमाणिक्य-मण्डपनिवासिने विष्णवे०। माणिक्यनानारत्नप्राकारान्तरालगतनानारत्न-मयसहस्रस्तम्भ-मण्डित-महामण्डपाधिष्ठिताय कुठार-मृग-वराभयकराय चन्द्रमुकुटाय चन्द्राभाय शम्भवे०। नानारत्न-मनोमय-प्राकारान्तरालगत-पीयूषवाटिकास्थित-नावि-निषण्णायै वारिदमेचकायै शाक्यदर्शनदेवतायै तारायै०। मानसबुद्धि–प्राकारान्तरालगतानन्दवाटिका-स्थितनावि-निषण्णायै वारुण्यै०। बुद्धिशालाऽहङ्कारान्तरालगत–विमर्श-वाटिकातीरगतायै कुरु-कुल्लायै०। अहङ्कारसूर्यप्राकारान्तरालगत-बालातपकक्षास्थिताय मार्तण्ड-भैरवाय०। सूर्य-चन्द्रप्राकारान्तरालगतचन्द्रिकोद्गारवासिने सोमनाथाय०। चन्द्र-शृङ्ग-प्राकारान्तरालगत-शृङ्गार-परिखास्थित-नौकाधिष्ठिताय रति-पतये०। शृङ्गार-प्राकार-चिन्तामणि-गृहान्तरालगत-त्रिलक्षयोजनविस्तीर्ण-महापद्माटवी-निषण्णायै क्षीरान्नापूर्णदर्विकायै अन्नपूर्णायै०। सहस्रयोजना-याम-चिन्तामणिगृहराजाय०। चिन्तामणिगृहपूर्वद्वारस्थितायै सिंहरथस्थितायै शङ्खचक्रधरायै महिषहन्त्र्यै दुर्गायै० चिन्ता-गृह-दक्षिणद्वारस्थायै अक्षमाला-पुस्तककरायै शशाङ्कनिभायै वाग्वादिन्यै०। चिन्तामणिगृह-प्रत्यग्द्वारस्थिताय जपाकुसुमारुणाय दर्शन-सिंहासनस्थाय त्रिपुरागमाय०। चिन्तामणिगृहोत्तर-द्वारस्थितायै अरुणवर्णायै सम्पत्सरस्वत्यै०। चिन्तामणिगृहपूर्वद्वारपूर्वभागे अर्घमहाभाजने स्थितायै अमृतेश्वर्यै०। चिन्तामणिगृहमभितः स्थित-रश्मि-मालादेवतापालकायानन्द-ताण्डवोद्दण्ड-पण्डिताय महाशम्भुनायकाय०। चिन्तामणि-गृह-पूर्वद्वारोत्तरभागस्थित-मणिसिंहासन-स्थितायै शुक-वीणा-करायै श्यामायै मन्त्रमातङ्गिन्यै०। हल-मुसल-कपाल-वर-करायै मन्त्रवा-राह्यै०। चिन्तामणिगृहान्तर्गत-शतयोजनायामोच्चायै रत्नवेदिकायै०। रत्न-वेदिकास्थितसङ्गीतयोगिनीभ्य०। चिन्तामणिगृहमध्यस्थित-शक्तिरक्षाकराय सततदशवर्षायारुणाय कुमारकामेशाय०। तदुपरि श्रीचक्रराजाय०। अभितश्चक्रराजरक्षाकरायै पूर्णनाथ सहितायै जपाकुसुमारुणायै श्रीपूर्त्यम्बायै०।

ततस्त्रैलोक्यमोहनचक्राय०। सर्वाशापूरकचक्राय०। सर्वसंक्षोभणचक्राय०। सर्वसौभाग्यदायकचक्राय०। सर्वार्थसाधकचक्राय०। :सर्वरोगहरचक्राय०। सर्वसिद्धिप्रदचक्राय नमः। तत्र त्रिकोणाग्रकोणे कामरूपपीठाय०। दक्षकोणे

पूर्णगिरिपीठाय॰। उत्तरकोणेजालन्धरपीठाय॰। मध्ये उड्याणपीठाय॰। तत्र पञ्चप्रेतासनरूपरत्नसिंहासनाय नमः। पूर्वपादे ब्रह्ममयैकमञ्चपादाय नमः। दक्षिणे पादे विष्णुमयैकमञ्चपादाय॰। पश्चिमपादे रुद्रमयैकमञ्चपादाय॰। उत्तरपादे ईश्वरमयैक-मञ्चपादाय॰। हसौः सदाशिवमहाप्रेतपद्मासनाय नम इति सदाशिवमयमञ्चफलकाय॰। पञ्चब्रह्ममय-मञ्चपालिकायै दाडिमी-कुसुमप्रभायै सततनववर्षवयसे पाशाङ्कुशाक्षवलय-पुस्तक-करायै ललिता-दुहित्रे॰।

ततः पूर्वपादे चैतन्यभैरव्यै॰। कामेश्वरीभैरव्यै। दक्षिणपादे रुद्रभैरव्यै॰। पश्चिमपादे षट्कूटाभैरव्यै॰ नित्याभैरव्यै॰। उत्तरपादे भुवनेश्वरीभैरव्यै॰। अन्नपूर्णेश्वरीभैरव्यै॰। मञ्चफलकस्थितायै सम्पत्प्रदाभैरव्यै॰ मञ्चसिंहासन-शृङ्गस्थितायै समस्तचक्ररक्षाकरायै सप्ताननायै ललिताज्येष्ठदुहित्रे॰। हंसतूलतूलिकायै॰। हंसतूलमहोपधानाय॰ कौसुम्भास्तरणाय॰। महाविता-निकायै॰। महाजवनिकायै॰। जवनिकातो बहिः सिंहासनमभितः पूर्वतो मध्यभागे—मुक्ताफलामल-मणिस्फुरच्छशिप्रभं छत्रं दधत्यै वामाशक्त्यै॰। तदुभयतो गङ्गातरङ्गधवलं चामरद्वयं क्रमेण धारयन्त्यै ज्येष्ठायै रौद्र्यै॰। पीठदक्षिणदेशे नवरत्नस्फुरद्दीप्ति-ताम्बूलकरण्डकं दधत्यै अम्बिकायै॰। मल्लिका-मालती-जाती-शतपत्राढ्यदामभिः पूर्णरत्नमयं भाण्डं दधत्यै इच्छाशक्त्यै॰। अलङ्कारपूरितां पेटीं दधत्यै ज्ञानशक्त्यै॰। पश्चिमदेशे मयूरपिच्छनिर्मितं नवरत्नविचित्रितं व्यजनमेकं दधत्यै क्रियाशक्त्यै॰। उशीर-विराजितं द्वितीयं व्यजनं दधत्यै कुब्जिकायै॰। कर्पूर-मृगनाभ्याढ्य-कुङ्कुमक्षोदमण्डितं स्वर्णचषकं दधत्यै विभ्व्यै॰। उत्तरतो हीरराजितां कङ्कतीं दधत्यै विषघ्निकायै॰। कज्जल-शलाकां दधत्यै इतर्यै॰। चन्द्रपूरितं करण्डं दधत्यै आनन्दायै नम इति सम्पूज्य—कौसुम्भ-वस्त्रोत्तरच्छदोपरि बिन्दुरूप-सर्वानन्दमय-कामेश्वर-चक्रायेति सम्पूजयेत्।

अत्र च सुधाम्बुधेरनेकब्रह्माण्डबहिःस्थत्वं तन्त्रान्तरानुरोधेनोक्तम्। ब्रह्माण्डपुराणादौ तु मेरु-मध्यशृङ्गस्थत्वं श्रीपुरस्य वर्णितम्। तत्रैवोक्तं प्राकारादीनां योजनप्रमाणं विस्तरभयान्न विशेषतः प्रतिपादितम्। तत्र पूर्वोक्तत्रैलोक्य-मोहनाद्यष्टचक्राणां क्रमेण मुक्ता-माणिक्य-चन्द्रबिम्ब-जपा-कुसुम-दाडिमीकुसुम-तप्तहेम-बालार्क-किरण-बन्धूककुसुमवर्णाः। बालायां तु मञ्चरूपं पीठमात्रमेव, न तु कामेश्वरचक्रतदङ्कस्थितिर्वेति विशेषः। महाप्रेतासन-मन्त्रस्तूद्धृतो बाला-प्रकरणे—

मध्यचक्रस्थितं बीजं सदाशिव-महापदम् ।
प्रेतपद्मासनं ङेऽन्तं हृन्मनुर्मनुरीरितः ॥

बालाचक्रीय-मध्यत्रिकोणस्थितं हसौरिति । इतरत् स्पष्टम् । पञ्चप्रेतासन-रूप-मञ्चस्वरूपं तु—

रत्न-स्वर्णाकृति-स्फार-दीप्तिमच्छुद्धमव्ययम् । इति ।

तत्रैवोक्तम्—

'आवाह्य चक्रमध्ये तु मुद्रया हि त्रिखण्डया' ।

इत्यत्र 'चक्रमध्य' इत्यनेन पुष्पसञ्चयवत् पाणिगत-त्रिखण्डाबद्ध-त्रिकोणचक्रमुच्यते । ततश्च पुष्प-सञ्चयावबद्धां त्रिखण्डां कृत्वा ध्यायेत्, यथा—

[ ध्यानपद्यानि ]

एवं विन्यस्तदेहः सन् सर्वात्मा साधकोत्तमः ।
ध्यायन्निरामयं वस्तु जगत्त्रय-विमोहिनीम् ॥
अशेषव्यवहाराणां स्वामिनीं संविदं पराम् ।
उद्यत्सूर्यसहस्राभां दाडिमीकुसुमप्रभाम् ॥
जपाकुसुमसङ्काशां पद्मराग-मणिप्रभाम् ।
तडित्पुञ्जप्रभां तप्त-काञ्चनाभां परेश्वरीम् ॥
रक्तोत्पलदलाकार-पादपद्म-विराजिताम् ।
अनर्घरत्नखचित-मञ्जीर-चरणद्वयाम् ॥
पादाङ्गुलीयक-क्षिप्त-रत्नतेजोविराजिताम् ।
कदली-ललित-स्तम्भ-सुकुमारोरु-कोमलाम् ॥
नितम्बबिम्बविलसद्रक्तवस्त्रपरिष्कृताम् ।
मेखलाबद्ध-माणिक्य-किङ्किणीनाद-विभ्रमाम् ॥
अलक्ष्यमध्यमां चैव निम्नशातोदरीं पराम् ।
रोमराजीलताधूत-महाकुचफलान्विताम् ॥
सुवृत्त-निबिडोत्तुङ्ग-कुचमण्डल-राजिताम् ।
अनर्घमौक्तिकस्फार-हार-भार-विराजिताम् ॥
नवरत्नप्रभाराजद्ग्रैवेय-वर-भूषणाम् ।
श्रुतिभूषा-मनोरम्य-सुगण्डस्थल-मञ्जुलाम् ॥
उद्यदादित्यसङ्काश-ताटङ्क-सुमुखप्रभाम् ।
पूर्णचन्द्रमुखीं पद्मवदनां मीनलोचनाम् ॥

स्फुरन्मदन-कोदण्ड-सुभ्रुवं पद्म-लोचनाम् ।
ललाटपदसंराजत् सद्रत्नतिलकाङ्किताम् ॥
मुक्ता-माणिक्यघटित-मुकुटस्थल-किङ्किणीम् ।
स्फुरच्चन्द्रकलाराजन्मुकुटां लोचनत्रयाम् ॥
प्रवालवल्ली-विलसद्-बाहुवल्ली-चतुष्टयाम् ।
इक्षुकोदण्ड-पुष्पेषु-पाशाङ्कुश-चतुर्भुजाम् ॥
सर्वदेवमयीमम्बां सर्वसौभाग्यसुन्दरीम् ।
सर्वतीर्थमयीं दिव्यां सर्वकाम-प्रपूरणीम् ॥
सर्वक्षत्रमयीं विश्ववन्द्यां विद्यामयीं शिवाम् ।
सर्वयोगमयीं देवीं सर्वदेवस्वरूपिणीम् ॥
सर्वशास्त्रमयीं नित्यां सर्वागमनमस्कृताम् ।
सर्वाम्नायमयीं देवीं सर्वायतनशोभिताम् ॥
सर्वानन्दमयीं ज्ञान-गह्वरां सिद्धिदां पराम् ॥

इति ध्यातां हृच्चक्रस्थितामन्तःसौषुम्णाटवी-निर्भेदनकुशलां निरस्तमोह-तिमिरामाद्यां संविदं वहन्नासापुटेन निर्गतां पुष्पसञ्चये 'ह्स्रैं हस्क्ल्रीं ह्स्रौः' इत्यावाहनविद्यया तामावाह्य पुनः 'ह्स्रैं हस्क्ल्रीं ह्स्रौः' इति मूर्त्तविद्यया मूर्तिं विरचय्य पुष्पाञ्जलिं चक्रोपरि प्रक्षिप्य तां पूर्वपूजित-श्रीपीठान्त-र्वासिनीं विचिन्त्य कामेश्वराङ्के संस्थितामिति चिन्तयेत् ।

अत्रायुध-ध्यान-सन्निवेशस्तु संहितायाम् –

कमलाकार-सम्पन्नाः पञ्चबाणा मनोहराः ।
मधुलिड्-गुणसम्पन्नमैक्षवं हि शरासनम् ॥
प्रवालवल्लीघटितः पाशः क्षौमगुणान्वितः ।
चन्द्ररेखा-समः स्वच्छः सृणिराकर्षणक्षमः ॥
दक्षिणाधः करे बाणान् वामाधस्तु शरासनम् ।
वामोर्ध्वे पाशमारक्तं दक्षोर्ध्वे तु सृणिं परम् ॥

इति । पञ्चबाण-नामधेयानि 'कादिमते'–

कमलं कैरवं रक्तं कह्लारेन्दीवरं तथा ।
सहकारकमित्युक्तं पुष्पपञ्चकमीश्वरि ॥

सृणिस्तु सौवर्ण इत्युपदेशः । कमलाकारसम्पन्ना इति संहितायाम् । कमलान्येवाकार इति समासः ।

[ आवाहनादि-मानसपूजाक्रमः ]

तत ऊर्ध्वाञ्जलिमधः कृत्वा 'श्रीमहात्रिपुरसुन्दर्यावाहिता भव' इत्यावाहनमुद्रां प्रदर्श्य, ऊर्ध्वाञ्जलिं कृत्वा श्री॰ संस्थापिता भवेति संस्थापिनीं मुद्रां प्रदर्श्य, मुष्टियुगलं मीलितं कृत्वा श्री॰ सन्निहिता भवेति सन्निधापिनीं मुद्रां प्रदर्श्य, अन्तरङ्गुष्ठ-मुष्टिभ्यां श्री॰ सन्निरुद्धा भवेति सन्निरोधनमुद्रां प्रदर्श्य, अन्तरङ्गुष्ठ-मुष्टि-हस्तयोस्तर्जन्यौ सरले कृत्वा श्री॰ अवगुण्ठिता भवेत्यवगुण्ठनमुद्रां प्रदर्श्य, चक्रं स्पृष्ट्वा पूर्वोक्तषडङ्गमन्त्रैर्देव्यङ्गेषु षट्सु षडङ्गन्यासे कृते श्री॰ सकलीकृता भवेति सकलीकरणमुद्रां प्रदर्श्य, करावेकत्र संयोज्यारात्रिकविधिनाऽऽरात्रिकं कृत्वा श्री॰ परमीकृता भवेति परमीकरणमुद्रां प्रदर्श्य, प्रसिद्धां धेनुमुद्रां प्रदर्श्य श्री॰ अमृतीकृता भवेति अमृतीकरणमुद्रां प्रदर्श्य, पूर्वोक्ता नवमुद्राः पाशाङ्कुश-धनुर्बाण-विशेष-मुद्रासहिताः प्रदर्श्य, वामाङ्गुष्ठानामिकायोग-रूपतत्त्वमुद्रया मूलान्ते श्रीमहात्रिपुरसुन्दरीं तर्पयामीति देवतामुखे कुसुमाद्युद्धृतश्रीपात्रामृतबिन्दुभिस्त्रिभिस्त्रिभिस्त्रिभिस्तर्पणं दक्षतर्जन्यङ्गुष्ठ-योगरूप-ज्ञानमुद्रयोद्धृताक्षतकुसुमैः सह त्रिधा कृत्वा पुनः पूर्ववद् देवीदेहे षडङ्गं कृत्वा गन्ध-पुष्पाक्षतादिभिर्मानसोपचारैः सम्पूज्य बहिःपूजामारभेत । अत्र—

'मुद्राः सन्दर्शयेद् देवि तर्पणैस्तु त्रिधा यजेत्' ।

इति बहुवचनान्त-तर्पणेनैव तर्पणत्रये सिद्धे पुनस्त्रिधेति-पदं बिन्दुत्रयोद्धरणरूपप्रकारस्य प्रत्येकतर्पणसाधनत्वं गमयति । गन्धपुष्पाक्षतादीनि देव्यै सम्यङ् निवेदयेदिति मूले सम्यक्पदं मानसव्यापारसावधानत्वरूपं सम्यक्त्वं गमयति । ततश्च मानसपूजां कुर्यादिति गमयति फलति । अत एव—

'सर्वोपचारैराराध्य मानसैः प्रकटैः शुभैः ।'

इति 'संहितायां' मानस-बाह्यपूजाद्वयमुक्तम् । मूलकृतापि—'उपचारैः षोडशभिः सम्पूज्य परदेवताम्' इत्यनेन बाह्यपूजाऽभिधीयत इति सर्वाऽप्येकवाक्यता लब्धा भवति ।

[ बाह्य-पूजाविधिः ]

अत्र च यदा तर्पणं कर्त्तव्यं भवति तदा तदा पूर्ववत् कर्त्तव्यम् । तदुक्तं दर्शनपूजोत्तरम्—

तर्पणं पूर्ववद् दद्यात् त्रिवारं तत्त्वमुद्रया ।
अङ्गुष्ठानामिकाभ्यां तु तत्त्वमुद्रेयमीरिता ॥

**पुष्पं समर्पयेद् देवि मुद्रया ज्ञानसंज्ञया ।**
**अङ्गुष्ठ-तर्जनीयोगाद् ज्ञानमुद्रा प्रतिष्ठिता ॥ इति ।**

अत्र क्रमेण वाम-दक्ष-हस्तयोगो ज्ञेयः । तदुक्तं **'स्वतन्त्रतन्त्रे'**-

**अङ्गुष्ठानामिकायोगाद् वामहस्तस्य पार्वति ।**
**तर्पयेत् परमेशानीं स-मुद्रां च स-वाहनाम् ॥**
**तर्पणानि मुखे देव्यास्त्रिवारं मूलविद्यया ॥**

यद्यपि अविशेषेण पुष्पसमर्पणमन्त्रोच्यते, तथापि 'अनया पुष्पपूजा स्यात् तथा तर्पण-पूजनम्' इति संहितायां पुष्पपूजायां विनियुक्ताया एव तस्यास्तर्पणसमकालीनपूजाङ्गत्वस्यापि प्रदर्शनात् तदेकवाक्यत्वेनेहापि तर्पण-समकालीन-पुष्पसमर्पणस्यैव 'पुष्पं समर्पये'दिति मूलस्य विधाने तात्पर्यकल्पनात् । अद्यावधि शिष्टसम्प्रदायोऽप्येवम् । ततो बहिः पूजां कुर्यात् । यथा मूलान्ते 'महात्रिपुरसुन्दरीपादुकां पूजयामी'त्युच्चार्य पादयोः पाद्यम् । एवमेवार्घं करे । आचमनं मुखे । स्नानं शिरसि । वसने परिधापयेत् । आभरणान्यङ्गावयवेषु । गन्धं ललाटादि-सर्वाङ्गे । पुष्पाणि शिरसि । धूपं नीचैः स्थापयेद् देवीवामे । दीपं देवीदक्षे । नैवेद्यं पुरतः । आचमनं मुखे । ताम्बूलं मुखे । पुष्पाञ्जलिं शिरसि–

**गणेश-ग्रह-नक्षत्र-योगिनीराशिरूपिणीम् ।**
**देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ॥१॥**
**प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।**
**कालहल्लोहलोल्लोलकलना-शमकारिणीम् ॥२॥**
**यदक्षरैक-मात्रेऽपि संसिद्धे स्पर्द्धते नरः ।**
**रविताक्ष्र्येन्दु-कन्दर्प-शङ्करानल-विष्णुभिः ॥३॥**
**यदक्षर-शशिज्योत्स्ना-मण्डितं भुवनत्रयम् ।**
**वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ॥४॥**
**यदक्षर-महासूत्र-प्रोतमत्र जगत्-त्रयम् ।**
**ब्रह्माण्डादि-कटाहान्तं तां वन्दे सिद्धमातृकाम् ॥५॥**
**यदेकादशमाधारं बीजं कोणत्रयोद्भवम् ।**
**ब्रह्माण्डादि-कटाहान्तं जगदद्यापि दृश्यते ॥६॥**
**अकचादि-टतोन्नद्ध-पयशाक्षर-वर्गिणीम् ।**
**ज्येष्ठाङ्ग-बाहु-हृत्-पृष्ठ-कटि-पाद-निवासिनीम् ॥७॥**

तामीकाराक्षरोद्धारां सारात् सारां परात् पराम् ।
प्रणमामि महादेवीं परमानन्दरूपिणीम् ॥८॥
अद्यापि यस्या जानन्ति न मनागपि देवताः ।
केयं कस्मात् क्व केनेति सरूपारूपभावनाम् ॥९॥
वन्दे तामहमक्षय्यां क्षकाराक्षर-रूपिणीम् ।
देवीं कुल-कलोल्लोल-प्रोल्लसन्तीं परां शिवाम् ॥१०॥
वर्गानुक्रम-योगेन यस्यां मात्राष्टकं स्थितम् ।
वन्दे तामष्टवर्गोत्थ-महासिद्ध्यष्टकेश्वरीम् ॥११॥
कामपूर्ण-जकाराख्य-श्रीपीठान्तर्निवासिनीम् ।
चतुराज्ञाकोशभूतां नौमि श्रीत्रिपुरामहम् ॥१२॥
इति द्वादशभिः श्लोकैः स्तवनं सर्वसिद्धिकृत् ।
देव्यास्त्वखण्डरूपायाः स्तवनं तव यद्यतः ॥१३॥

इति स्तोत्रम् । तर्पणं मुखे ।

श्रीमच्छ्रीकोश-हृदयं पञ्चसिंहासनात्मकम् ।
फलं कल्पलतानां तु पञ्चरत्न-स्फुरत्कलम् ॥१॥
चतुरायतनानन्दि-चतुरन्वयकोशगम् ।
नित्यानन्दि परं ब्रह्म धाम नौमि सुखाप्तये ॥२॥

इति नमस्काराः.

इति षोडशोपचारैः सम्पूज्य पुनः पूर्ववत् त्रिः सन्तर्पयेत् । अत्र द्वादश-श्लोकं स्तोत्रं 'कादिमत'–वामकेश्वरतन्त्रयोरुक्तम् । तस्य स्तवनं प्रति विनियोगस्तु 'इति द्वादशभिः श्लोकै'रित्यन्तिमश्लोकेनैव कृतः । 'श्रीमच्छ्री'-त्यादिश्लोकद्वयस्य नमस्कारसाधनत्वं तु आदिश्लोकद्वयेनापि 'नत्वा सौभाग्य-देवता'मिति 'संहिता'यामुक्तम् । अत्र पाद्य-समर्पणादि-क्रियाः सामान्यार्घ-जलेनेति प्रागेवोक्तम् । अत्र च गन्धादिमुद्राभिर्वक्ष्यमाणाभि-र्गन्धादिसमर्पणं ज्ञेयम् । गन्धस्तु कस्तूरीसंयुतकुङ्कुमक्षोदात्मको ज्ञेयः ।

पीठशक्त्यन्तर्गत-विभ्वीशक्तिधृत-स्वर्णचषके तस्यैव पूरणेन देवताप्रियत्वावगतेः । अत्र मूलमन्त्रान्ते 'श्रीमहात्रिपुरसुन्दरि पाद्यं गृहाण नमः' इति प्रयोगं कुर्वन्ति केचित् । अत्र धूपं गृहाण, 'दीपं गृहाण देवेशि! त्रैलोक्यतिमिरापहम्' इत्यादि तत्तन्मन्त्रगतगृहाणेत्यादि-पदप्रयोगो मूलम् । केचित् तु सर्वोपचारमन्त्रास्त्रितारीपूर्वाः 'कल्पयामि नमः' इति परशुराम-सूत्रान्मूलान्ते 'पाद्यं कल्पयामि नमः' इति प्रयोगमिच्छन्ति । अपरे तु–

**अर्घं शिरोऽन्तं त्रिपुर-सुन्दरीति पदोपरि ।**
**देव्याः शिरस्यनेनार्घं सदूर्वाक्षतमर्पयेत् ॥**
**नमोऽन्तं पादयोः पाद्यं सुधेत्याचमनं मुखे ।**
**सुधान्तेनैव मनुना मधुपर्कं मुखाम्बुजे ॥** इति ।

तथा –

**उक्तेष्वेषूपचारेषु यत्किञ्चिद् दुर्लभं यदि ।**
**तत्कल्पनीयं मनसा मूलबीजत्रयोपरि ॥**
**पादुकां पूजयामीति त्रिधा पुष्पं विनिक्षिपेत् ।**

इति '**विशुद्धेश्वर**'-तन्त्रानुरोधेन मूलान्ते 'त्रिपुरसुन्दर्य्यर्घं स्वाहा, पाद्यं स्वाहा नमः' इति प्रयोगमाहुः । '**ललितार्चन-चन्द्रिका**'यां तु मूलान्ते 'श्रीमहात्रिपुर-सुन्दरी-पादुकायै अर्घं कल्पयामि, पाद्यं क०' इति प्रयोग उक्तः । क्वचित् तु मूलान्ते 'महात्रिपुरसुन्दर्यै नमः पाद्यं समर्पयामी'ति प्रयोगो लिखितः ।

मम तु प्रतिभाति । यद्यपि **ज्ञानार्णवे** 'ईदृशः प्रयोगः कर्त्तव्यः' इति विशिष्य नोक्तं तथापि समस्तचक्रपूजान्ते–

**अतिगह्वरमेवेदं ज्ञात्वा चक्रं समर्चयेत् ।**
**पादुकां पूजयामीति नमस्कारोऽथवा भवेत् ॥**
**स्वाहा होमे तर्पणे तु तर्पयामीति संस्मरेत् ॥**

इति '**दक्षिणामूर्त्ति-संहिता**'यां सप्तविंशे पटले व्यवस्था-प्रदर्शनान्मूलान्ते 'महात्रिपुरसुन्दरीपादुकां पूजया'म्यथवा मूलान्ते 'महासुन्दर्य्यै नमः' इत्युच्चार्य उपचार-समर्पणमात्रं कुर्यात् । तथा मूलान्ते 'महात्रिपुरसुन्दर्य्यै स्वाहा, मूलान्ते 'महात्रिपुरसुन्दरीं तर्पयामी'त्युच्चार्य होम-तर्पणे कुर्यात् । यद्यपि नामोच्चारणमत्रापि प्रतीयते, तथापि–

**एवं सप्ताक्षरी प्रोक्ता शक्तितन्त्रेषु सिद्धिदा ।**
**सप्ताक्षर्यानया देवि योजयेन्नाम-पूर्वकम् ॥**
**सर्वासामपि शक्तीनां देवतानां च नामभिः ।**
**योजयेन्नामपूर्वा सा सिद्ध्यै साधारणान्यथ ॥**

इति '**कादिमते**' तद्विधानं ज्ञेयम् । एतावान् विशेषः । संहितायामुक्तस्य पादुकामन्त्रनमस्कारयोर्विकल्पस्य–

**'शक्तितन्त्राद् बहिर्भूते तन्त्रे तु नमसा स्थितिः ।'**

इति कादिमते व्यवस्था-प्रदर्शनाच्छक्तितन्त्रे नामान्ते पादुकां पूजया-मीत्युच्चार्य केवलमुपचारसमर्पणम् । यदा शुद्धं त्रिधा तर्पणम्, तदा मूलान्ते

श्रीमहात्रिपुरसुन्दरीं तर्पयामीत्येव प्रयोगः। विद्यमानेऽपि पुष्पाक्षतसाहित्ये तर्पणोपसर्जनात्वेन तर्पणैकप्रयोजनत्वेन स्वतन्त्रपूजात्वाभावान्न तर्पयामीति प्रयोगसाहित्येन पादुकां पूजयामीति प्रयोगः कार्यः।

अणिमाद्यावरणपूजासु तु नामान्ते 'पादुकां पूजया'मीत्युच्चार्य पुष्पाक्षतादि निक्षिप्य पुनर्नामद्वितीयान्तमुच्चार्य तर्पयामीत्येवं प्रयुज्य तर्पणं दद्यात्। एवं सर्वत्र ज्ञेयम्। एवं स्थिते संहितावचनं प्रधानदेवतामात्रपरं नत्वाऽऽवरणदेवतापरमिति नाशङ्कनीयम्, समस्तचक्रपूजान्ते समाम्नातत्वात्। अत एव मूले बालाप्रकरणे–

**'गन्ध-पुष्पाक्षतादीनि दद्याच्छ्रीसहितं सदा'। तं सदा'।**

इति श्लोके श्रीसहितामित्यनेन श्रीपादुकामन्त्रसहितमथवा नमोऽन्तमन्त्रसहितं दद्यादित्यर्थो ध्वनितः। एवं च सर्वावरणपूजान्ते धूप-दीप-पदार्थ-निवेदनेषु 'साङ्गायै सपरिवारायै धूपं निवेदयामीति' प्रयोगो निर्म्मूल एव। तथाविध-प्रयोगोच्चारणाभावेऽपि पूर्वोक्त-पादुकामन्त्रान्तमुच्चार्य धूपादि-पदार्थ-दानेनापि साङ्गायाः सम्भवादिति।

प्रत्यक्षोपचारासम्भवे तु 'विशुद्धेश्वर'-तन्त्रे–

**उक्तेष्वेषूपचारेषु यत् किञ्चिद् दुर्लभं यदि।**
**तत्कल्पनीयं मनसा मूलबीजत्रयोपरि॥**
**पादुकां पूजयामीति त्रिधा पुष्पं विनिक्षिपेत्॥ इति।**

मूलबीजत्रयं मूलकूटत्रयमित्यर्थः। ततः–

**संविन्मये परे देवि परामृतरुचिप्रिये।**
**अनुज्ञां त्रिपुरे देहि परिवारार्चनाय मे॥**

इत्याज्ञां सम्प्रार्थ्य वक्ष्यमाणनित्यामध्ये या तिथि–नित्या, तामादौ पूजयेत्। तत्र मध्ये त्रिकोणं पञ्चदशनित्यास्थितियोग्यं महद् विभाव्य तत्र स्वाग्रादि-वामावर्त्तेन दक्षिणरेखायामकारादि पञ्च, पूर्वरेखायां दीर्घ ऊकारादि-पञ्चोत्तर-रेखायामेकारादि-पञ्चस्वराँल्लिखितान् विभाव्य बिन्दुमध्ये विसर्गं विभाव्यानुस्वारान्तेषु तेषु शुक्लपक्षे कामेश्वर्यादि-चित्रान्तं कृष्णपक्षे कामेश्वर्यन्तं वामावर्त्तक्रमेण तिष्ठति।

तत्रादौ चन्द्रकलारूपां प्राप्ततिथिनित्यां सम्पूज्य पश्चान्नित्यामण्डलं पूजयेत्। तत्र केचित् प्राप्ततिथिनित्यां सम्पूज्य तदनन्तरं क्रमेणेवोत्तर-नित्याः सम्पूज्य प्राप्ततिथिनित्या-प्राक्तननित्यापूजनपर्यन्तं समापयन्ति।

केचित् तु प्राप्ततिथिनित्यापूजनानन्तरं कामेश्वरीक्रमेण चित्राक्रमेणैव वा नित्यामण्डलं पूजयन्ति । उभयसम्प्रदायेऽपि मूलग्रन्थः प्रमाणं दृश्यते । तथा हि—

एतस्मिन् समये देवि तिथिनित्यां प्रपूजयेत् ।
कामेश्वर्यादिका नित्या विचित्रान्ता महेश्वरि ॥
प्रतिपत्पूर्णमास्यन्तास्तिथिरूपाः प्रपूजयेत् ।
विभाव्य च महात्र्यस्रमग्रदक्षोत्तरं क्रमात् ॥
रेखासु विलिखेत् पञ्च पञ्च पञ्च क्रमेण हि ।
अकारादि उकारान्ता दक्षिणायां विचिन्तयेत् ॥
ततश्च पूर्वरेखायां दीर्घकर्णादि-पञ्चकम् ।
विलिख्योत्तररेखायां शक्त्यादि विलिखेत् ततः ॥
अनुस्वारान्तमात्रासु विसर्गे षोडशीं यजेत् ।
वामावर्त्तेन देवेशि नित्या षोडश कीर्त्तिताः ॥
प्रतिपत्तिथिमारभ्य पौर्णमास्यन्तमद्रिजे ।
एकैकां पूजयेन्नित्यां महासौभाग्यमाप्नुयात् ॥
कृष्णपक्षे महेशानि पूजयेत् तिथिमण्डलम् ।
विचित्राद्या वरारोहे यावत् कामेश्वरी भवेत् ॥
पूजनीया विलोमेन अन्यत्र परमेश्वरि ।
कलाः षोडश देवेशि यास्तु चन्द्रकलाः क्रमात् ॥
स सौभाग्यं महादेवि प्राप्नोति गुरुशासनात् ।
कामेश्वर्यादिका नित्याः पूजयित्वा क्रमात् ततः ॥
तिथिनित्यां त्रिधा देवि पूजयेद् भाग्यहेतवे ।
पुनः श्रीत्रिपुरां नित्यां यजेत् सौभाग्यहेतवे ॥

इति मूलग्रन्थे—'एतस्मिन् समये' इत्यनेनादौ तिथिनित्यापूजनमुपक्रम्य—'एकैकां पूजयेन्नित्यां महासौभाग्यमाप्नुया'दित्यनेनोपसंहृत्य कृष्णपक्ष इत्यनेन नित्यामण्डलं कृष्णपक्षभेदेन व्यवस्थितमुपपाद्य—'कामेश्वर्यादिका नित्याः पूजयित्वा क्रमात् ततः' इत्यनेन कामेश्वर्यादिनित्यानां पूजनं विधीयते । उत्तरत्र च पुनस्तिथिनित्यापूजात्रैविध्यं स्वतन्त्रमिति प्रतीयते । अतः सर्वतिथिष्वपि स्वकालप्राप्तां तिथिनित्यां सम्पूज्य पश्चाच्छुक्लपक्षे कामेश्वर्यादिचित्रान्तं कृष्णपक्षे चित्रादिकामेश्वर्यन्तं नित्यामण्डलं पूज्यमित्युत्तरेषामाशयः ।

मूलकृता तु शुक्लपक्षीय-प्रतिपन्नित्या कामेश्वर्येव तिथिनित्यात्वेनादौ उदाहरणत्वेन प्रदर्श्यते । ततश्च कामेश्वरीं तिथिनित्यामादौ सम्पूजयेत् तदाद्याः सर्वा अपि पश्चात् सम्पूजयेदित्यर्थस्यैकत्र प्रदर्शितस्य कामेश्वर्यादिका नित्या इत्यनेनोपसंहारमात्रं क्रियते, न त्वपूर्वविधानं स्वातन्त्र्येण, गौरवापत्तेः । न हि 'कृष्णपक्षे महेशानि पूजयेत्तिथिमण्डलम्' इत्ययं भागः स्वतन्त्र-कामेश्वर्यादिनित्यामण्डलपूजोपपादनार्थ एव सन् युज्यत इति वक्तुं शक्यते । उदाहरणप्रदर्शने प्रतिपत्सार्थप्रतिपत्स्वकाल- प्राप्ततिथिनित्याकामेश्वर्यादिकथनोपयोगि-शुक्ल-कृष्ण-पक्षापेक्षित-कामेश्वर्य्यादित्व-चित्रादित्व-व्यवस्थामात्रोपपादकत्वेनापि सार्थक्यात् । अतः प्रतिपत्तिथिनित्याक्रमेण मूलप्रदर्शितेन समानन्यायादुत्तरतिथिष्वपि तत्तत्–स्वकालप्राप्तनित्यां सम्पूज्य तदनन्तरक्रमेणैवोत्तरनित्यापूजनं स्वकालप्राप्ततिथिनित्या-प्राक्तननित्यापूजनसमाप्तिकं कार्यम् । तिथिनित्यापूजनत्रैविध्यमपीत्थम् ।

आदावेकदा तिथिनित्यां सम्पूज्य पुनस्तां सम्पूज्य तदनन्तरं नित्याक्रमेण तिथिनित्या-प्राक्तननित्यान्तं पूजनं समाप्य पुनस्तां तिथिनित्यां पूजयेदिति ज्ञेयम् । एवञ्च स्वकालप्राप्ततिथिनित्यापूजनानन्तरोपस्थितोत्तरनित्यापूजोपस्थितिर्न बाधिता भवति । अनुपस्थितकामेश्वर्य्यादिपूजनं च नापद्येतेति पूर्वेषामाशयः । अत्र च मूलेऽग्रशब्देन सन्मुखः पूर्वभागो गृह्यते। यद्यपि 'रेखासु विलिखे'दित्यनेन रेखासु लिखनमेव भाति, तथापि 'दक्षिणायां विचिन्तये'दित्युत्तरग्रन्थाद् विभावितमेव लिखनं प्रतीयत इति लिखितान् विभाव्येति भावः ।

'पूजनीया विलोमेने'त्यत्र पूजनीयेति पूर्वेण सम्बद्ध्यते । अन्यत्र शुक्लपक्षे विलोमेन पूर्वापेक्षया । ततश्च कामेश्वर्यादि-चित्रान्तमित्यर्थः । 'पुनः श्रीत्रिपुरां नित्या'मिति पुनःशब्दो देहलीदीपन्यायेनोभयत्र सम्बद्ध्यते। एवं च सम्प्रदायद्वये समूलत्वेन भासमाने सति को वा सम्प्रदायः सयुक्तिक इति तत्त्वं तु सहृदयैरेवालोचनीयं भवति । मम तु अनन्तरोपन्यस्तपूर्वमतसम्प्रदाय एव सम्प्रदाय इति तदनुसारेण नित्यापूजा लिख्यते ।

**अथ नित्यापूजा –**

तत्र गुरु-पूजाप्रकरणे मूलकृता–

**'रश्मि-वृन्दं दलमितं गुरूणां तु शताधिकम्' ।**

इत्यत्र सकलनित्यादि-परिवाराणां मुख्यदेवी-रश्मिप्रायत्वसूचनात् तासां च स्वातन्त्र्येण पूजायां यथोक्तविहितध्यानभेदे सत्यपि श्रीचक्रे श्रीसुन्दर्य-ङ्गत्वेन पूजायां कामेश्वराङ्कयन्त्रणं विना श्रीसुन्दरीसमान- ध्यानवर्णा-युधादिकं ज्ञेयम् । तदुक्तं 'संहितायाम्'–

**अथवा रश्मयः सर्वदेवीरूपेण चिन्तयेत् ।**
**श्रीचक्रे परमेशानि स्वतन्त्रे स्वस्वसन्निभाः ॥ इति ।**

कादिमते–

**नवावरणशक्तीनां ध्यानं देव्याः समं भवेत् ।**
**कामाङ्कयन्त्रादन्यत्र भूषा-वर्णायुधादिकम् ॥**
**तत्समं परमेशानि चक्रस्थानामशेषतः ॥ इति ।**

तत्रापि–'स्व-स्व-मुद्राकराः सर्वाः श्रीविद्यासम्मुखाः स्मरेत्' इति संहितायामुक्तम् । प्रधानदेवी-सम्मुखत्वं स्व-स्व-पूजायां तु पूजनसम्मुखत्वं भवतीति द्रष्टव्यम् ।

तत्र शुक्लप्रतिपत्क्रमेण–

'ऐं क्लीं सौः ॐ नमः कामेश्वरि इच्छाकामफलप्रदे सर्वसत्त्ववशङ्करि सर्वजगत्क्षोभणकरि हूं हूं हूं द्रां द्रीं क्लीं ब्लूं सः सौः क्लीं ऐं कामेश्वरी-नित्याश्रीपादुकां पूजयामि तर्पयामि' इति अं स्थाने । इति स्वातन्त्र्येणादौ सम्पूज्य पुनर्नित्यामण्डलान्तःपातित्वेन पूर्ववत् पूजयेत् । ततोऽग्रे वामावर्त्तेन–

ऐं भगभुगे भगिनि भगोदरे भगाङ्गे भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशङ्करि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वभगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय सर्वसत्त्वान् नगेश्वरि अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्त्वान् नगेश्वरि ऐं ब्लूं जं ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं भगक्लिन्ने भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं । भगमालिनीनित्या श्रीपा॰ पू॰ त॰ इति 'आं' स्थाने । ततः –

ह्रीं नित्याक्लिन्ने मदद्रवे स्वाहा । नित्यक्लिन्ना॰ । 'इं' स्थाने ।

ततः–क्रों भ्रों क्रों च्रौं छ्रौं ज्रौं झ्रौं स्वाहा । भेरुण्डानित्या॰ । ईं स्थाने ।

ततः–ह्रीं वह्निवासिन्यै नमः । वह्निवासिनीनित्या॰ । उं स्थाने ।

ततः–ॐ ह्रीं फ्रें सः नित्यक्लिन्ने मदद्रवे स्वाहा । महाविद्येश्वरीनित्या॰ ॐ स्थाने ।

ततः–ह्रीं शिवदूत्यै नमः । शिवदूतीनित्या॰ । ऋं स्थाने ।

ततः– ॐ ह्रीं हूं खे च छे क्षः स्त्रीं हूं क्षे ह्रीं फट् त्वरितानित्या०।

ॠं स्थाने।

ऐं क्लीं सौः कुलसुन्दरीनित्या०। लृं स्थाने।

ऐं क्लीं सौः हसकलरडैं हसकलरडीं हसकलरडौः द्रां द्रीं क्लीं ब्लूं सः सौः क्लीं ऐं नित्यानित्या०। लॄं स्थाने।

ॐ ह्रीं फ्रें स्रूं आं ह्रीं क्रों नित्यमदद्रवे हुं क्रों नीलपताकानित्या०।

एं स्थाने।

भ्म्यौं विजयानित्या०। ऐं स्थाने।

स्वौं सर्वमङ्गलायै नमः। सर्वमङ्गलानित्या०। ओं स्थाने।

ॐ नमो भगवति ज्वालामालिनि देवि देवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति २ ज्वल प्रज्वल २ हूं २ इइइ हुं फट् स्वाहा। ज्वालामालिनीनित्या०। औं स्थाने।

च्कौं चित्रानित्या०। अं स्थाने।

इति क्रमेण पञ्चदशनित्याः सम्पूज्य तदुत्तरत्वेन प्राप्तां पुनस्तिथिनित्यां कामेश्वरीं पूर्ववत् सम्पूज्य विसर्गस्थाने मध्यबिन्दौ मूलान्ते श्रीमहात्रिपुरसुन्दरीनित्याश्री० इति सम्पूजयेत्। एवमेव द्वितीयादि-क्रमेण ज्ञेयम्। कृष्णपक्षे तु चित्रादिपूजनम्। तिथिवृद्धौ दिनद्वयेऽप्येकाम्। क्षयदिवसे द्वयमिति। तदुक्तं संहितायाम्–

**एकादिवृद्ध्या हान्या च दर्शान्तं क्रमतो यजेत्।** इति।

अत्र च केषुचित् पद्धति-पुस्तकेषु 'अं आं' इत्यादि षोडश-स्वरयोगो नित्यामन्त्रेषु लिख्यते, स तेषु तेषु त्रिकोणलिखितेषु तत्तन्नित्यापूजास्थानकत्वप्रदर्शनार्थः। न तु मन्त्रेषु पूर्वं नियमे प्रयोक्तव्य इत्येतदर्थः।

**तिथिनित्यास्ततो देवि मातृका-स्वर-संयुताः।**
**मातृकावन्न्यसेद् देवि वक्त्रे सौभाग्यदायिनीः॥**

इति न्यासेषु तद्योगस्यावश्यकत्वेऽपि–

**अकारादिषु सर्वेषु स्वरेषु क्रमतो यजेत्।**
**अः स्वरे परमेशानि श्रीविद्यां विश्वमातृकाम्॥**

इत्यनेन पूजायां स्वराधिकरणत्वमात्रविधानात्। अग्रे च–

**'स्वरवद् विन्यसेन्नित्या नीरजायतलोचने'।**

इत्यनेन न्यासप्रसङ्गेन मध्ये कथिते नित्यापूजने पुनर्नित्यान्यासोपसंहारः क्रियत इति न बोधकम्। अत्र च बिन्दुचक्रोत्तरं यत् त्रिकोणं लिखित-

मस्ति, तदेव पञ्चदशनित्यास्थितियोग्यमिति तत्रैव नित्यापूजेति 'चतुःशती-वामकेश्वर'-मतम् । मूलकृता तु त्रिकोणनिरपेक्षतया महात्र्यस्र-विभावनोक्तेर्बिन्दुचक्रे परित एव त्रिकोणं विभाव्यमित्युक्तं भवति । कादिमते तु बिन्दावेवेति विशेषः । अतः परं विक्षिप्तचेतोवृत्तीनां नित्या-मन्त्रेषु न्यूनाधिकाक्षरदोष-परीहारायातिविस्तृतोऽपि नित्यामन्त्रोद्धारमूल-ग्रन्थो लिख्यते । यथा—

[ नित्यामन्त्रोद्धारः ]

बालान्तरं च हृत्प्रान्ते कामेश्वरिपदं लिखेत् ।
इच्छाकाम-फलप्रान्ते प्रदे सर्वपदं लिखेत् ॥
ततः सत्त्ववशं ब्रूयात् करि-सर्वजगत्पदम् ।
क्षोभणान्ते करि ब्रूयाद् हूङ्कारत्रितयं लिखेत् ॥
पञ्चबाणान् समालिख्य संहारेण कुमारिकाम् ।

सैषा षट्चत्वारिंशदक्षरा 'कामेश्वरी-नित्या' तथा—

वाग्भवं भगशब्दान्ते भुगे भुगिनि चालिखेत् ।
भगोदरि भगाङ्गे च भगमाले भगावहे ॥
भगगुह्ये भग-प्रान्ते योनि-प्रान्ते भगान्तिके ।
निपातिनि च सर्वेति ततो भगवशङ्करि ॥
भगरूपे ततो लेख्यं नीरजायतलोचने ।
नित्यक्लिन्ने भग-प्रान्ते स्वरूपे सर्व चालिखेत् ॥
भगानि मे ह्यानयेति वरदेऽथ समालिखेत् ।
रेते सुरेते च भगक्लिन्ने क्लिन्नद्रवे ततः ॥
क्लेदय द्रावयाथो च सर्वसत्त्वान् नगेश्वरि ।
अमोघे भगविच्चे च क्षुभ क्षोभय सर्व च ॥
सत्त्वान् भगेश्वरि ब्रूयाद् वाग्भवं ब्लूं जमादिमम् ।
भें ब्लूं मों ब्लूं च ह ब्लूं च भगक्लिन्ने ततः परम् ॥
सर्वाणि च भगान्यन्ते मे वशं चानयेति च ।
स्त्रीं बीजं च हर प्रान्ते वलमात्मकमक्षरम् ॥
भुवनेशीं समालिख्य विद्येयं भगमालिनी ॥

सैषैकोनपञ्चाशदधिकशताक्षरी भगमालिनी-विद्या ।

अत्र भगोदरि भगान्ते चेति पाठोऽपपाठः । तथा–

परावीजं समालिख्य नित्यक्लिन्ने मदद्रवे ।
अग्निजायाऽन्वितो मन्त्रो नित्यक्लिन्नेयमीरिता ॥

सेयं 'नित्यक्लिन्ना-नित्या' एकादशाक्षरी । तथा–

प्रणवं पूर्वमुच्चार्य तथाऽङ्कुशयुगं लिखेत् ।
तन्मध्ये विलिखेद् देवि भ-रोमात्मकमक्षरम् ॥
चवर्गमन्त्यहीनं च विलिखेद् वह्निसंस्थितम् ।
चतुर्दशस्वरोपेतं बिन्दुनादाङ्कितं पृथक् ॥
वह्निजायाऽन्वितो मन्त्रो भेरुण्डायाः प्रकीर्तितः ॥

सैषा दशाक्षरी 'भेरुण्डा-नित्या' । तथा–

भुवनेशानीं समुच्चार्य चतुर्थ्यां वह्निवासिनीम् ।
हृदन्तोऽयं मनुर्देवि नित्येयं वह्निवासिनी ॥

सैषाऽष्टाक्षरी 'वह्निवासिनी नित्या' । तथा–

प्रणवं भुवनेशानीं फरेमात्मकमक्षरम् ।
सविसर्गः शशी पश्चान्नित्यक्लिन्ने मदद्रवे ॥
वह्निजायाऽन्विता विद्या सर्वैश्वर्यप्रदायिनी ॥

महाविद्येश्वरी-नित्येति । सैषा 'महाविद्येश्वरीनित्या' चतुर्दशाक्षरी । तथा–

पराबीजं समुच्चार्य शिवदूतीं च ङेयुताम् ।
हृदन्तोऽयं मनुर्देवि० ........................ ॥

इति । सैषा सप्ताक्षरी 'शिवदूती-विद्या' । तथा–

ओकारं बीजमुच्चार्य पराकवचमालिखेत् ।
खे च छे क्षः समालिख्य स्त्रीं बीजं च समालिखेत् ॥
हूंकारं क्षे परां चास्त्रं विद्येयं द्वादशाक्षरी ।

तथा–

सर्वसिंहासनमयी बालेव कुलसुन्दरीति ।

तथा–

बालया पुटितां कुर्यात् तथा चैतन्यभैरवीम् ।
पञ्चबाणाँश्च देवेशि नित्या शक्राक्षरी भवेत् ॥ इति ।
प्रणवं भुवनेशानीं फरेमात्मकमक्षरम् ।
सूमात्मकं द्वितीयं च भुवनेश्यङ्कुशं ततः ॥

नित्य-शब्दं समुद्धृत्य सम्बुद्ध्या तु मदद्रवाम् ।
कवचं चाङ्कुशं विद्याद् देवी नीलपताकिनी ॥

सैषा पञ्चदशाक्षरी 'नीलपताका-नित्या' । द्वितीयम् आम् इति । तथा–

बान्तं कालसमायुक्तं वह्निबीजगतं ततः ।
पृथग् यं च समायुक्तं ततः शक्रस्वरान्वितम् ॥
बिन्दुनादाङ्किते देवि नित्येयं विजया प्रिये ।

सैषैकाक्षरी 'विजया-नित्या' ।

चन्द्रवारुणसंयुक्तं तारबीजं समालिखेत् ।
चतुर्थ्यन्तं ततो देवि विलिखेत् सर्वमङ्गलाम् ॥
हृदन्तोऽयं मनुर्देवीति ।

सैषा नवाक्षरी 'सर्वमङ्गला-नित्या' । तथा–

तारं हृद्भगवत्यन्ते ज्वालामालिनि देवि च ।
द्विरुच्चार्य च सर्वान्ते भूतसंहारकारिके ॥
जातवेदसि संलिख्य ज्वलन्ति पदयुग्मकम् ।
ज्वलेति प्रज्वल-द्वन्द्वं हूङ्कार-द्वितयं लिखेत् ॥
वह्निबीजत्रयं हुं च अस्त्रस्वाहान्वितो मनुः ।

सैषा चतुःपञ्चाशदक्षरा 'ज्वालामालिनी-नित्या' । तथा–

कवर्गान्तं स्वरान्तं च शक्रस्वर-विभूषितम् ।
बिन्दुनाद-कलाक्रान्तं विचित्रा परमेश्वरि ॥

सैषैकाक्षरी 'चित्रा-नित्या' । कवर्गान्तश्चकारः । स्वरान्तः ककारः ।

॥ समाप्तं नित्याप्रकरणम् ॥

अथ गुरु-मण्डल-पूजोच्यते–

तत्राद्यावधि गुरूणामानन्त्येन पूजनस्य चाशक्यत्वादपेक्षित-नियत-गुरुपूजा मूलोक्ता प्रदर्श्यते । तत्र मध्यत्रिकोण-पृष्ठभागे रेखात्रयं विभाव्य प्रथमरेखायां दक्षादिवामान्तम्–'परप्रकाशानन्दनाथ-श्रीपादुकां पू॰ । परशिवानन्दनाथश्रीपा॰ । परशक्त्यम्बा-श्रीपा॰ । कौलेश्वरानन्दनाथ-श्रीपा॰ । शुक्लदेव्यम्बा-श्रीपा॰ । कुलेशानन्दनाथ-श्रीपा॰ । कामेश्वर्यम्बा-श्रीपा॰ ।' इति पराख्यान् सप्त दिव्यान् गुरून् सम्पूज्य, द्वितीयरेखायां तथैव–

'भोगानन्दनाथ॰ । क्लिन्नानन्दनाथ॰ । समयानन्दनाथ॰ । सहजानन्द-नाथ॰ ।' इति परापराख्याँश्चतुरः सिद्धाख्यान् सम्पूज्य, तृतीयरेखायां तथैव–

'गगनानन्द॰ । विश्वानन्द॰ । विमलानन्द॰ । मदनानन्द॰ । भुवनानन्द॰। नीलानन्द॰ । स्वात्मानन्द॰ ॥ प्रियानन्द॰' । इत्यष्टौ मानवानपराख्यान् गुरून् सम्पूज्य, ततो–

अमुकानन्दनाथ-परमेष्ठिगुरुश्रीपा॰। अमुकानन्द-परमगुरु-श्रीपा॰ । अमुकानन्द॰ स्वगुरुश्रीपा॰ इति गुरुत्रयमथवा मानवौघाष्टकान्ते उपरितनाष्टौ स्वीयान् गुरून् सम्पूज्यानन्तरं नवमं स्वगुरुं पूजयेत् । यदा तु स्वगुर्वनन्तरं स्वगुरव आचार्याः सिद्धाश्च न ज्ञायन्ते, क्रमो वा न ज्ञायते, तदा–

'गुरुभ्यो नमः, गुरुपादुकाभ्यो नमः । गुरु-परमगुरुभ्यो नमः, परम-गुरु-पादुकाभ्यो नमः । आचार्येभ्यो नमः, आचार्यपादुकाभ्यो नमः । पूर्वसिद्धेभ्यो॰ सिद्धपादुकाभ्यो नमः' इति पूजयेत् ।

त एते कामराजविद्यायां दिव्य-सिद्ध-मानवगुरवो निदर्शिताः । लोपामुद्रागुरवस्तु–

'परमशिव॰ कौलेश्वर्यम्बिका॰ दिव्यौघ॰ महौघ॰ सर्वानन्त॰ प्रज्ञादेवी॰ प्रकाशाख्याः सप्त दिव्यगुरवः ।'

'दिव्यचित्र॰ कैवल्य॰ दिव्यम्बा॰ महोदयाख्याः' परापराख्याः सिद्ध-गुरवश्चत्वारः ।

ऋद्धि॰ शक्ति॰ वशिष्ठ॰ कमल॰ परानन्द॰ मनोहर॰ आत्मानन्द॰ प्रतीत॰' इत्यष्टौ मानवा अपरा गुरवः ।

एतान् सम्पूज्यान्यत् सर्वं पूर्ववत् पूजयेदिति । अत्र च यद्यपि–

'प्राग् योनि-मध्ययोन्योस्तु मध्ये निजगुरून् यजेत्' ।

इत्यनेन त्रिकोणपृष्ठे विहिते बालायां गुरुपूजनेऽतिदेशप्राप्तेऽपि–

'मध्यप्राक्त्र्यस्रमध्ये तु गुरुपङ्क्तिं त्रिधा जपेत्' ।

इत्यत्र वक्ष्यमाण-गुरुत्रय-पूजार्थं रेखात्रयरूप-पङ्क्तित्रयविभावनं विधीयते । मध्यप्राक्त्र्यस्रयोर्मध्य इत्यर्थः । यजेद् विभावयेत् ।

'मानवौघान्तिके पश्चात् स्वगुरुत्रितयं यजेत्' ।

इत्यनेन विहिते स्वगुरुत्रय-पूजने—

**परमेष्ठी गुरुः पश्चाद् गुरुः परमसंज्ञकः ।**
**स्वगुरुश्च महेशानि पूजयेत् तद्गुरुत्रयम् ॥**

इत्यनेन गुरुत्रयं निरूप्यते ।

**'मानवौघे तदा देवि दश-सप्त भवन्ति हि' ।**

इत्यस्य मानवौघे अष्टौ पूर्वमुक्ताः । एते स्वीया नवेत्येवं सप्तदशेत्यर्थः ।

**'गुर्वर्णपरमान्ते च गुरुभ्यो नम इत्यपि' ।**

इत्यनेन मूले गुरु-इत्येतद् वर्णद्वयमेव गुर्वर्णेत्यनेनोच्यते । ततश्च 'गुरु-परमगुरुभ्यो नमः' इति प्रयोक्तव्यम् । अत्र पुरुषाणां गुरूणाम्—

**'आनन्दनाथ-शब्दान्ता विज्ञेया वीरवन्दिते' ।**

इति मूलकृताऽऽनन्दनाथ-शब्दान्तत्वेन पूजा कार्य्येत्युक्तमेव । स्त्रीणां तु—

**अम्बान्ता गुरवो ज्ञेयाः स्त्रीलिङ्गाः परमेश्वरि ।**

इति संहितायामम्बान्तत्वविधानान्मूलकृताऽपि मध्ये क्वचिदम्बापदयुक्ताना-मेवाभिधानाच्चाम्बान्तत्वं द्रष्टव्यम् । पूर्वोक्तासु कामराज-लोपामुद्रा-विद्यातिरिक्तविद्यासु साधारणगुरवस्तु संहितायां द्रष्टव्याः ।

**तत 'आम्नायदेवताः' पूजयेत् । यथा—**

'ह्स्रीं स्ह्रीं श्रीं क्लीं उन्मनी पूर्वाम्नायेश्वरी श्रीपा॰ पू॰ न॰ ।'

इति चतुरस्रादित्रिके **सृष्टिचक्रे** ।

ऐं क्लिन्ने क्लीं मदद्रवे कुले ह्स्रौं भोगिनी दक्षिणाम्नायेश्वरी-श्रीपा॰ पू॰ तर्प॰ ।' इति चतुर्दशारादि-**स्थितिचक्रे** ।

'ऐं ह्रीं श्रीं हस्ख्फ्रें ह्सौं भगवति अम्ब हस्ख्फ्रें २ कुब्जिके ह्स्रां ह्स्रीं ह्स्रं अघोरे घोरे अघोरमुखि ह्स्रां ह्स्रीं किणि-किणि विच्चे ह्सौं हस्ख्फ्रें श्रीं ह्रीं ऐं कुब्जिकापश्चिमाम्नायेश्वरी-श्रीपा॰ पू॰ तर्प॰ । इत्यष्टारादि-त्रिके **संहारचक्रे** ।

ख्फ्रें महाचण्डयोगेश्वरि कालिकोत्तराम्नायेश्वरी-श्रीपा॰ पू॰ तर्प॰ ।

चतुरस्रादि-नवचक्रेषु इति । अत्र च—

**त्रैलोक्यमोहने चक्रे सर्वाशापरिपूरके ।**
**सर्वसंक्षोभणे चक्रे पूर्वाम्नायं प्रपूजयेत् ॥**
**सर्वसौभाग्यदे चक्रे तथा सर्वार्थसाधके ।**
**सर्वरक्षाकरे चक्रे दक्षिणाम्नायमर्चयेत् ॥**

मध्यचक्रत्रये देवि पश्चिमाम्नायमर्चयेत् ।
नवचक्रेषु देवेशि कौबेराम्नायमर्चयेत् ॥

इति समीचीनेऽपि मूलग्रन्थपाठे 'मध्यचक्रद्वये नवमे चक्रे' इति पठन्ति तत्पूर्वापरविरुद्धम् । चक्रनिर्माण-प्रस्तावे सृष्टि-स्थिति-चक्रे उपपाद्य संहार-चक्रोपपादने–

एतच्चक्रं तु संहाररूपं ब्रह्ममयं सदा ।
पश्चिमाम्नाय-संसेव्यं त्रयमुत्तरपूजितम् ॥

इत्युक्तत्वात् । आम्नायविद्यास्तूद्धृता नवमपटले-

ह्स्रीमात्मकमुच्चार्य स्ह्रीमात्मकमद्रिजे ।
शक्तिं कलाभ्यामन्ते च तुर्यबीजमुदाहृतम् ॥
श्रीबीजं कुरु तार्त्तीयं विद्या वेदाक्षरी भवेत् ।

उन्मनी-नाम विद्येयमिति । तथा-

वाग्भवं बीजमुच्चार्य क्लिन्ने कामस्य बीजकम् । ।
मदद्रवे कुले ह्स्रौर्विधेयं भोगिनी प्रिये ॥

तथा–

वाग्भवं च परा श्रीश्च हस्ख्फ्रेमिति प्रिये ।
हसऔ ( ह्स्रौं ) च ततो देवि पञ्चैते प्रणवाः स्मृताः ॥
भगवत्यम्ब आलिख्य पृथक् पदमथेश्वरि ।
चतुर्थं प्रणवं चैव हस्ख्फ्रेमिति प्रिये ॥
कुब्जिके चैव ह्स्रां च ह्स्रीं ह्स्रू ततः परम् ।
अघोरे चैव घोरे च अघोरमुखि चालिखेत् ॥

कुब्जिकेयं महाविद्येति । आद्यन्तपञ्चप्रणव-वियोगेनेयं द्वात्रिंशदक्षरी विद्या । अत्र च मूलग्रन्थस्यापि अन्यथापाठं सम्प्रदायाज्ञानजनितार्था-सम्बद्धत्वभ्रमेण परिकल्प्यान्यथाऽन्यथा विद्यामुद्धरन्ति पद्धति-पुस्तकेषु; परन्तु बहुतर-साम्प्रदायिकशोधेन साम्प्रदायिकोद्धृता विद्या मयेति विश्वस-नीयम् । तथा–

ख्फ्रेमात्मकमुच्चार्य महाचण्डपदं लिखेत् ।
योगेश्वरि-पदं पश्चाद् विद्येयं कालिका प्रिये ॥
एताभिः परमेशानि पूज्यं सिंहासनं सदा ॥ इति ॥

सिंहासनशब्देन चात्र सर्वानन्दमयं चक्रं बैन्दवमुच्यते । ततः पञ्च-सिंहासनपूजां कुर्यात् । यथा–

[ पञ्चसिंहासनपूजा ]

स्हैं स्क्लीं स्हौः चैतन्यभैरवीश्रीपा॰ पू॰ त॰।

स्हैं स्क्ल्ह्रीं नित्यक्लिन्ने मदद्रवे स्ह्रौः कामेश्वरी-भैरवी-श्रीपा॰ पू॰ त॰।

इति **सृष्टिचक्रे**। ततः–

हस्ख्फ्रें हस्क्लीं हसौः रुद्रभैरवीश्रीपा॰ पू॰ तर्प॰। इति **स्थितिचक्रे**।

ततः–

डरलकसहैं डरलकसहीं डरलकसहौं षट्कूटा-भैरवीश्रीपू॰ त॰।

हसकलरडैं हसकलरडीं हसकलरडौं नित्याभैरवी-श्रीपू॰ त॰। इति **'संहारचक्रे'**। ततः –

ह्सैं ह्स्क्ल्ह्रीं ह्सौं भुवनेश्वरीभैरवीश्रीपा॰ पू॰ तर्प॰।

ॐ ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा, अन्नपूर्णेश्वरीभैरवीश्रीपा॰ तर्प॰। इति **नवचक्रेषु**।

हस्रैं हस्क्रीं हस्रौं सम्पत्प्रदाभैरवीश्रीपा॰ पू॰ तर्प॰। इति **बिन्दुचक्रमध्ये**। अत्र चाम्नायपूजोत्तरं मूले-

**'बैन्दवे परमेशानि मध्य-सिंहासनं यजेत्'**।

इति यच्चतुःसिंहासनानपेक्षमध्ये सिंहासनमात्रपूजाभिधानं तत्पूर्वोक्ताम्नाय-चतुष्टयस्थानेषु चतुर्णां पूजां सिद्धीकृत्येति मध्यपदेन सूचितं भवति। न ह्येतदयुक्तं यतः सृष्टि-स्थिति-लयकर्तृणां यन्त्राणां ब्रह्म-विष्णवीशानां तुरीयस्येश्वरस्य च तत्तत् सामर्थ्यदातृत्वेनोपास्यदेवतानां चतसृणामुक्त-भैरवीणां तत्तत्स्थानेषु पूजाया युक्ततरत्वात्।

**भू-बिम्ब-षोडशारं च वसुपत्रं क्रमेण च।**
**सृष्टिचक्रं भवेदत्र पूजनं कथ्यते प्रिये॥**
**श्री-परं ज्योतिराद्याश्च सर्वाः सम्पूजयेत् क्रमात्॥**

इत्यारभ्य **'अनेनैव प्रकारेण विद्यावृन्दं प्रपूजयेत्'** इत्यन्तेन सृष्टि-स्थितिलय-चक्राणि त्रीण्यभिधाय सकलचक्रस्य चानाख्यमित्याख्यां चोक्त्वा 'श्रीकोश-सिंहासनगं' तथा 'कल्पलतात्मक'मित्यन्ते उपसंहृतिपर-संहिताग्रन्थेऽपि आम्नाय-सिंहासनादि-सर्वदेवतानां पूजनमुक्तम्। एवं स्थिते पीठध्यान-पूर्वकश्रीसुन्दरीध्यान-पटले–

**श्रीविद्यापूजनस्थाने चक्रपूर्वादितः प्रिये।**
**महाकोशेश्वरीवृन्द-मण्डितासन-संस्थिता॥**

**सर्वसौभाग्यजननी-पादुकां पूजयामि च ।**
**इत्युच्चार्य परंज्योतिः कोशाम्बां पूजयेत् सुधीः ॥**

इति संहितायां दृश्यमानो ग्रन्थो ध्यानप्रसङ्गे पूजाप्रसङ्गकथनस्यायुक्तत्वात् तत्र प्रमादपतित एव; किन्तु उत्तरपटले वक्ष्यमाण-पूर्वोक्त-सृष्टिचक्रादि-स्थलेषु कथ्यमानपूजावसर-प्राप्त-मन्त्रकथनपरोऽयं ग्रन्थस्तत्रैव युक्त इति ध्येयम् ।

अस्तु वा तत्रैव पीठप्रस्ताव-प्रसङ्गागत-तत्तद्देवतापुरःस्फूर्तिकत्वेन सम्बद्धा मन्त्रकथनसङ्गतिस्तथापि पूजकप्रयोजनस्य मन्त्रस्य लिङ्गात् पूजाङ्गत्वे सति यत्र पूजा तत्रैव मन्त्रविनियोग इत्यर्थसिद्धत्वेनोत्तरग्रन्थानुरोधेन चक्र-पूर्वादित इत्यस्य चक्राणां मध्ये यत्पूर्वं प्रथमं चक्रं सृष्टिचक्रं तदादिस्थिति-संहारान्तेषु चक्रेषु पूजयेदित्येवार्थो युक्तः ।

अतश्चैतादृश-संहितार्थभ्रमेण बैन्दवचक्र-पूर्वादिदिक्षु चतुःसिंहासनानां बैन्दवे मध्ये च मध्यसिंहासनस्य पूजां ये लिखन्ति प्राचीना आधुनिकाश्च निबन्धकारास्तत् प्रौढवादमित्युपेक्ष्यम् ।

ततः पञ्चसिंहासनवदेव पञ्चपञ्चिकापूजनं कुर्यात् । यथा–

**[ पञ्च-पञ्चिका-पूजा ]**

श्रीं लक्ष्मीश्रीपादुकां पूज० तर्पयामि । (सृ०) ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद २ श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः । महालक्ष्मीश्रीं० पू० त० । (स्थि०) श्रीं ह्रीं क्लीं त्रिशक्तिलक्ष्मीश्रीपा० पू० त० । (सं०) श्रीं स्क्लृह्रीं श्रीं सर्वसाम्राज्यलक्ष्मीश्रीपा० पू० त० । (सर्वचक्रेषु) मूलान्ते महालक्ष्मीश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीविद्यापा० पू० त० । (इति बिन्दुमध्ये)

इति **पञ्चलक्ष्मीः** सम्पूज्य–

ॐ ह्रीं हंसः सोहं स्वाहा परंज्योतिः कोशाम्बा श्रीपा० पू० त० । (सृ०) आँ परनिष्कलशाम्भवीकोशाम्बाश्रीपा०पू०त० । (स्थि०) हंसः अजपाकोशाम्बाश्रीपा० पू० त० । (संहार०) अं ५० मातृका-कोशाम्बा-श्रीपा० पू० त० । (सर्वचक्रेषु) मूलान्ते–महाकोशेश्वरी-वृन्द श्रीविद्यापा० पू० त० । (इति बिन्दुमध्ये)

इति **'पञ्च कोशाम्बाः'** सम्पूज्य–

ॐ ह्रीं हुं खे च छे क्षः स्त्रीं हूं क्षें ह्रीं फट् त्वरिता-कल्पलताश्रीपा० पू० त० । (सृष्टि०) ॐ ह्री हस्रैं ह्री ॐ सरस्वत्यै नमः पारिजातेशी-

कल्पलताश्रीपा० पू० त० । (स्थिति०) ह्रीं श्रीं क्लीं त्रिपुटाकल्पलता-श्रीपा० पू० त० । (संहार०) द्रां द्रीं क्लीं ब्लूं सः पञ्चबाणेशीकल्पलता-श्रीपा० पू० त० । (सर्वचक्रेषु) मूलान्ते–महाकल्पलतेश्वरीवृन्द० श्रीविद्यापा० पू० त०। (बिन्दौ)

इति **पञ्च कल्पलताः** सम्पूज्य–

ह्रीं हंसः सञ्जीविनि जूं सः प्राणं ग्रन्थिस्थं कुरु २ स्वाहा, अमृत-पीठेशी-कामदुघाम्बाश्रीपा० पू० त० । (सृ०) वद वद वाग्वादिनि ह्क्लैं क्लिन्ने क्लेदिनि महाक्षौभे कुरु कुरु ह्स्क्लीं ॐ मोक्षं कुरु कुरु ह्सौः सुधाश्रीकामदुघाश्रीपा० पू० त० । (स्थि०) ऐं प्लूं ह्म्रौं जूं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा, अमृतेश्वरी कामदुधाश्रीपा० पूज० त० । (सं०) ॐ ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा, अन्नपूर्णेश्वरी-कामदुघाश्रीपा० पू० त० । (सर्वचक्रेषु) मूलान्ते महाकामदुघेश्वरीवृन्द० श्रीविद्यापा० पू० त० । (बिन्दौ)

इति '**पञ्च कामदुघाः**' सम्पूज्य–

ॐ ह्रां ह्रीं ह्रूं क्षौं क्रौं नमः परमहंसिनि निर्वाणमार्गं देहि विषम-पप्लवशमिनि सकलदुरितारिष्टक्लेशदलिनि सर्वापदम्भोधितारिणि । सकल-शत्रु-प्रमथिनि देवि आगच्छ २ हस २ वल्ग २ नररुधिरान्त्रव-साभक्षिणि मम शत्रून् मर्द २ खाहि २ त्रिशूलेन भिन्धि २ खड्गेन दारय २ छेदय २ तावन्मम सकलमनोरथान् साधय २ परमकारुणिके भगवति महाभैरवि(वी)रूपधारिणि त्रिदशवरनमस्कृते सकल-मन्त्रमातः प्रणतजन-वत्सले महाकालिनि कालनाशिनि हुं हुं हुं हुं प्रसीद मदनातुरं आं क्रों कुरु २ सुरासुरकन्यकां ह्रीं श्रीं क्लीं क्रौं फट् फट् फट् स्वाहा सिद्धलक्ष्मीरत्न-श्रीपा० पू० त० । (संहार०)

ऐं क्लीं सौः ऐं क्लीं सौः ऐं ह्रीं श्रीं ॐ नमो भगवति मातङ्गेश्वरि सर्वजनमनोहरि सर्वराजवशङ्करि सर्वमुखरञ्जिनि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वलोकवशङ्करि ह्रीं श्रीं क्लीं ऐं मातङ्गीरत्नश्रीपा० पूज० तर्प० । (स्थिति०) ह्रीं भुवनेश्वरीरत्नश्रीपा० पू० त० । (संहार०) ऐं ग्लौं ऐं नमो भगवति वार्त्तालि २ वाराहि २ वराहमुखि २ अन्धे अन्धनि नमः रुन्धे रुन्धि नमः जम्भे जम्भि नमः मोहे मोहि नमः स्तम्भे स्तम्भि नमः सर्वदुष्ट-प्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगति-जिह्वास्तम्भं कुरु

२ शीघ्रं वश्यं कुरु २ ऐं ग्लौं ठ ठ ठ ठ हुं फट् स्वाहा, वाराहीरत्नश्रीपा० पू० त० । (सर्वचक्रेषु) मूलान्ते-महारत्नेश्वरीवृन्द० श्रीविद्यापा० पू० त० । (बैन्दवे)

इति पञ्च रत्नानि पूजयेत् । अत्र च–

**'बैन्दवे परमेशानि मध्यसिंहासनं यजेत्'** । इत्यस्याग्रे–

**'अनेनैव प्रकारेण पूजयेत् पञ्चपञ्चिकाम्'** ॥ इत्यस्यायमर्थः । चतुराम्नायादि-मध्यसिंहासनान्तप्रकारेण पञ्चानां पञ्चिका पञ्चविंशतिस्तां पूजयेदिति । तथा–

**श्रीविद्यापूजनस्थाने चक्रराजे महेश्वरी ।**
**महाकोशेश्वरीवृन्द-मण्डितासनसंस्थिता ॥**
**सर्वसौभाग्यजननीपादुकां पूजयामि च ।**
**इत्युच्चार्य परंज्योतिः कोशाम्बां पूजयेत् सुधीः ॥**
**अनेनैव प्रकारेण पूजयेत् पञ्चपञ्चिकाम् ॥**

इत्यनेनैव विधीयमानः पूजामन्त्रो यद्यपि पञ्चानां पञ्चानां पूजासु प्रत्येकं लिख्यते पद्धतिकारैस्तथापि महाकामेश्वरी वृन्दमण्डितासनसंस्थितत्वरूप-मन्त्रलिङ्गस्य श्रीविद्यातिरिक्तचतसृषु असम्भवान्न युक्तः । न हि इतरकोश-देवीनां महाकोशेश्वरीवृन्दमण्डितत्वं किन्तु प्रधानभूतश्रीविद्याया एवेति तस्या एव पूजने मन्त्रः । इतरथा पञ्चानामपि श्रीविद्यापरिवाररूपेण पूजनस्य चक्रत्रयात्मक-श्रीचक्र एव प्राप्तेः । 'श्रीविद्यापूजनस्थाने चक्रराज' इत्यादि-स्थलदर्शन-पूर्वकमन्त्रोपदेशस्य निर्विशेषतापत्तेः । कोशाम्बा कोशानामम्बां स्वामिनीं पूजयेदित्यर्थः ।

यस्तु 'अनेनैव प्रकारेण पूजयेत् पञ्चपञ्चिका'मित्यन्तिमो ग्रन्थः, स महाकोशेश्वरीमन्त्रे कोशपदस्थाने लक्ष्म्यादिपदप्रक्षेपरूपोहप्रदर्शकत्वेन पञ्चसु पञ्चिकां पञ्चमीं श्रीविद्यामित्यर्थकः सन्नुपसंहारपर इति न विरुध्यते । एतेनैतादृशोपसंहार-ग्रन्थानुरोधेनैन्द्र्या गार्हपत्यमुपतिष्ठत इतिवल्लिङ्गबाध इत्यपास्तम्, अविरोधात् । अत्र च कल्पलतासु पञ्चसु कामेश्वरीस्थाने त्वरिता । कुमारीस्थाने त्रिपुटेति नित्यातन्त्रभेदं संहितापाठापेक्षया प्रदर्शयता **'सौभाग्यरत्नाकर'**कृता–

**श्रीविद्यापारिजातेशी पञ्चबाणेश्वरी तथा ।**
**त्वरिता त्रिपुटा चैव पञ्चकल्पलताः स्मृताः ॥**

इति क्रमपरो मूलपाठोद्धृत इत्यनुमीयते । कल्पलतासु द्वितीया त्वरितेति 'नित्यातन्त्रसंहिता'यां यथोक्तमधस्तादिति वदता 'सुभगार्चारत्न'कृता तु 'पारिजातेशी'स्थाने 'त्वरिता' इतरास्तु संहितोक्त्या समाः' इति सूचितम् । मया तु–

**श्रीविद्या त्वरिता चैव पारिजातेश्वरी तथा ।**
**त्रिपुटा पञ्चबाणेशी पञ्चकल्पलताः स्मृताः ॥**

इति निजानन्दनाथ-विरचित-'क्रमोत्तम'धृत-मूलपाठेन लिखिताः पञ्च-कल्पलताः ।

**[ पञ्चपञ्चिका-मन्त्रोद्धारः ]**

अतः परं मन्त्रेषु न्यूनाधिकाक्षरदोषपरीहारायातिविस्तृतोऽपि मन्त्रोद्धारे 'संहिता'ग्रन्थो लिख्यते–

**वारुणान्तं वह्नि-संस्थं दीर्घनेत्रविभूषितम् ।**
**बिन्दुनादयुतं बीजं लक्ष्मीमन्त्र उदाहृतः ॥**

वारुणान्तः शकारः । इतरत्स्पष्टम् । सेयमेकाक्षरी लक्ष्मीः । तथा–

**प्रणवं पूर्वमुच्चार्य हरेमात्मकमुद्धरेत् ।**
**त्रिपुटं चाथ कमले कमलाये प्रसीद च ॥**
**लाये-मध्यगतां भूमिं रुद्रस्थानं तु योजयेत् ।**
**प्रसीद-पूर्वबीजानि सम्पुटत्वेन योजयेत् ॥**
**महालक्ष्म्यै हृदन्तोऽणुरष्टाविंशतिवर्णवान् ।**

हरेमात्मकं हकार-रकारेङ्कारात्मकं ह्रीमिति । कमलाये इत्यक्षरान्त-रोक्तं भूमिं लकारं दद्यात् । तथा च 'कमलालये' इति सिद्धे स लकारः, आदितो गणनायां रुद्रस्थानमेकादशस्थानं तत्रत्यो भवति । एकादशाक्षरं भवतीत्यर्थः । स्पष्टमन्यत् । सेयं महालक्ष्मीः । तथा–

**श्रीबीजं च पराबीजं कामबीजं समालिखेत् ।**

पराबीजं ह्रीमिति । सेयं त्र्यक्षरी त्रिशक्तिलक्ष्मीः । तथा–

**चन्द्रेश-मादन-क्ष्मेश-वह्नि-दीर्घाक्षि-मण्डितम् ।**
**बिन्दु-चक्रेश्वरीयुक्तं विद्येयं वैष्णवी प्रिये ॥**
**श्रीबीजं सम्पुटं कुर्यात् सर्वसाम्राज्यदायिनी ॥**

चन्द्राद्याः सकार-हकार-ककार-लकार-हकार-रकार-ईकार-बिन्दवः । सेयं त्र्यक्षरी । सर्वसाम्राज्यलक्ष्मीः ।

अथ कोशाः —

प्रणवं पूर्वमुच्चार्य परां हंसः पदं लिखेत् ।
ततः सोऽहं शिरो देवि वसुवर्णेयमीरिता ॥

सेयं परंज्योतिः । तथा—

अनुग्रहादि देवेशि बिन्दुनाद-कलान्वितः ।

अनुग्रहश्चतुर्दशस्वर औकारस्तस्यादिरोकारः । सेयमेकाक्षरी परनिष्कल-शाम्भवी ।

हंसः परं परेशानि प्रत्यहं जपते नरः ।

सेयं द्व्यक्षर्यजपा । तथा—

अकारादि-क्षकारान्तवर्णावयवदेवताम् ।

सेयं मातृका ।

अथ कल्पलताः —

तत्र त्वरिता नित्याप्रकरणे मूले उद्धृता—

सम्पत्प्रदा-भैरव्या वाग्भवं बीजमालिखेत् ।
तारेण परया देवि सम्पुटीकृत्य मन्त्रवित् ॥
सरस्वती हृदन्तोऽयं रुद्रार्णो मनुरीरितः ।

सेयं पारिजातेशी —

परादिर्वा भवेद् देवि कामादिर्वा भवेदियम् ।

इति 'तन्त्रसार'-धृत-दक्षिणामूर्त्तिवचनोद्धृता त्रिपुरा। श्रीमायामदनैरुक्ता त्रिपुरा इयं पदेन परामृश्यते । पञ्चबाणबीजैः पञ्चबाणेशी । तानि च प्राङ्मूल एवोद्धृतानि ।

अथ कामदुघाः —

तत्र दक्षिणामूर्त्तिसंहितायामुक्तं पश्चिमसिंहासन-विद्याद्वयमेवामृत-पीठेशी सुधांशुविद्यात्वेन सर्वैः साम्प्रदायिकैरुक्तमुद्ध्रियते—

शक्तिबीजं समालिख्य शिवचन्द्रौ समालिखेत् ।
अनुस्वार-विसर्गाभ्यां मण्डितौ क्रमतः प्रिये ॥
सञ्जीविनि च जं जीवं प्राणग्रन्थिस्थमालिखेत् ।
कुरुद्वयं द्विरावृत्त्या वह्निजायान्वितो मनुः ॥
विंशत्यर्ण ऋषिः शुक्रो गायत्रं छन्द उच्यते ।

जीवः सकारः । स्पष्टमन्यत् । तथा–

**वद द्वन्द्वं वादिनीति वाङ्मध्यं निक्षिपेत् प्रिये ।**
**हस्रके वाग्भवं देवि क्लिन्ने क्लेदिनि चालिखेत् ॥**
**महाक्षोभं कुरु द्वन्द्वं शिवचन्द्रकलान् वदेत् ।**
**वामाक्षि बिन्दुनादाङ्काँस्तारबीजं ततो वदेत् ॥**
**मोक्षं कुरु युगं हंसः शक्रस्वर-विसगर्वत् ।**

वद-द्वन्द्व-वादिनीति-पदयोर्मध्ये वागिति पदं निक्षिपेत् । हस्र इत्यस्य के मस्तके वाग्भवं ऐं तेन हस्रैमिति । शिवचन्द्रौ प्रसिद्धौ । कल इति स्वरूपोपादानम् । वामाक्षि-बिन्दुनादैरङ्किता इत्यर्थः । ह्स्क्लीं इति । हसेत्यक्षरद्वयम् । शक्र औकारः विसर्गः प्रसिद्धस्तद्वत् । ह्सौरिति । सेयमेकत्रिंशदर्णा सुधाश्रीः । 'ललितार्चन-चन्द्रिका'यां तु अन्यथेयं विद्या पठिता । तदुद्धारस्तूद्धृतः 'कुलार्णवे'–

**वाग्भवं पावनी भूमिः पुष्टि-बिन्दु-समन्विता ।**
**स्थितिश्च पावकानुग्रहादर्द्धेन्दुसमलङ्कृता ॥**
**स्थिरार्घीशेन्दु-संयुक्ता श्वेता बिन्दुयुगान्विता ।**
**अथामृते पदं ब्रूयात् तत् पश्चादमृतोद्भवे ॥**
**अथामृतेश्वरि प्रोक्ता पश्चादमृतवर्षिणि ।**
**अमृतं स्रावय युगं द्विठान्तो द्रव्यशुद्धिकृत् ॥**
**अमृताख्यो मनुः प्रोक्तः पञ्चत्रिंशद्भिरक्षरैः ।**

पावमानी पकारः । भूमिर्लकारः । अर्द्धेन्दुरर्द्धचन्द्रानुस्वारः । एवं ह्स्रौं इति । स्थिरा जकारः । अर्धीशो दीर्घ ऊकारः । इन्दुरनुस्वारः । एवं जूमिति । श्वेता सकारः । बिन्दुयुगं विसर्गः । एवं सः । द्विठः स्वाहा । स्पष्टमन्यत् । सेयममृतेश्वरी । 'न्यासगीता'दौ तु प्लूँ ह्स्रौमिति बीजद्वयं विहाय त्रयस्त्रिंशदर्णेयमुक्ता । अन्नपूर्णा तूद्धृता द्वितीयोल्लासे प्राक् ।

अथ रत्नाः –

**धनञ्जयाक्रान्तविभुः क्रमाद् दीर्घत्रयान्वितः ।**
**चन्द्रचूडामणिः क्रोध-पदाक्रान्तश्च रावणः ॥**
**लान्तो दण्डी सरो देवाधीश्वरेणानुमोदितः ।**
**अनुग्रहपरो ब्रह्मा बृहद्भानु-कृतासनः ॥**
**पूर्णोत्तमाङ्गो हृन्मन्त्रस्ततः परमहंसिनि ।**
**निर्वाणमार्गं देहीति विषमोपप्लवेति च ॥**

शमिन्यग्रे च सकलदुरितारिष्टतः परम् ।
प्रवदेत् क्लेशदलिनीत्यतः सर्वापदं पदम् ॥
पुरुहूताग्रजाराध्यो द्विरण्डेशोधितारिणि ।
सकलादग्रतः शत्रुप्रमथिन्यथ देवि च ॥
आगच्छाम्रेडितं तद्वद्धसवलाद्वयं द्वयम् ।
नराग्रे रुधिरान्त्राग्रे वसाभक्षिणि योजयेत् ॥
मम शत्रून् मर्द मर्द खाहि-युग्मं ततो वदेत् ।
त्रिशूलेन द्विधा भिन्धि खड्गेन दारय द्विधा ॥
छेदय द्वितयं तावन्ममाग्रे सकलाक्षरान् ।
मनोरथान् साधय द्विस्ततः परमकारुणि ।
रुद्रेणानुगतो ब्रह्मा भगवत्यग्रतो महान् ॥
मणिपूराधर-र-वरूपधारिणि चोद्धरेत् ।
त्रिदशाग्रे वर नमस्कृते सकलमन्त्रतः ॥
मातश्च प्रणतादग्रे प्रवदेज्जनवत्सले ।
ततो देवि महाकालिन्यधाग्रे कालनाशिनि ॥
चतुःक्रोधं प्रसीदाथ योजयेन्मदनातुराम् ।
पाशाङ्कुशौ कुरुद्वन्द्वं सुरासुराग्रकन्यकाम् ॥
हृल्लेखां कमलां कामाङ्कुशावस्त्रं त्रिरुच्चरेत् ।
स्वाहान्तेनामुना सिद्धलक्ष्मीस्तारादिनावतु ॥

सेयं सिद्धलक्ष्मीः 'क्रमोत्तम'लिखिता । ललितार्चनचन्द्रिकाकृता धृता न्यासगीतायामुद्धृतेति मया लिखितेति ज्ञेयम् ।

अस्यार्थः –

धनञ्जयो रकारः । शम्भुर्हकारः । दीर्घत्रयं आ ई ऊ इति । चन्द्रो बिन्दुः । ततश्च ह्रां ह्रीं ह्रूं इति । क्रोधः ककारस्तदुत्तरपदं खकारः । रावणः फ्रें । ततश्च ख्फ्रें इति । लान्तः क्षकारः । दण्डो बिन्दुस्तद्वान् । सरो रकारेण सहितः देवाधीश्वरः । शक्रश्चतुर्दशस्वर औकार इति । ततश्च क्ष्रौमिति । अनुग्रहः औः। ब्रह्मा ककारः । बृहद्भानुः रकारः । पूर्णो बिन्दुः । ततश्च क्रौमिति । पुरुहूतश्चतुर्दशस्वरस्तस्याग्रजस्त्रयोदशस्वरः । द्विरण्डेशो भकारः । तेन भो इति । धितारिणीति स्वरूपम् । रुद्र एकादशस्वरः । ब्रह्मा ककारः । तेन के इति । मणिपूरचक्रं नाभिस्तेन भकारः । अधर ऐकारः । तेन भै इति । चतुःक्रोधं हुङ्कारचतुष्टयम् । स्पष्टमन्यत् ।

'सौभाग्यरत्नाकर'-कृता तु अन्यथेयं संक्षिप्तार्णोक्ता तद्ग्रन्थ एव द्रष्टव्या। मातङ्ग्यादित्रयमुद्धृतं संहितायाम्—

वाग्भवं कामराजं च सर्गवान् भृगुरुत्तमे।
अनुग्रहेण संयुक्तः पुनराद्यं परां लिखेत्॥
श्रीबीजं तारकं चैव नमो भगवतीति च।
मातङ्गेश्वरि सर्वान्ते मनोहरि जनादिकम्॥
सर्वराजवशं चान्ते करि सर्वमुखान्तकम्।
रञ्जिनीति ततः सर्वस्त्रीशब्दं च ततो वदेत्॥
पुरुषान्ते वशं चोक्त्वा कर्य्यन्ते सर्वदुष्टतः।
मृगान्ते वशमालिख्य सर्वलोकपदं लिखेत्॥
कर्यादिवशमालिख्य करिशब्दं ततो वदेत्।
परां श्रियं कामबीजं वाग्भवं च समालिखेत्॥
सप्ततिश्च त्रयो वर्णा मातङ्गीविग्रहः प्रिये।

भृगुः सकारः। अनुग्रहश्चतुर्दशस्वरः। मनोहरिपदं जनादिकं जनमनोहरि इति। सर्वलोकपदं कर्यादि। ततो मृगवशङ्करि सर्वलोकेति ज्ञेयम्। सेयं मातङ्गी।

शिवं वह्निसमारूढं वामाक्षि-परिभूषितम्।
बिन्दुनादकलाक्रान्तं विद्येयं भुवनेश्वरी॥
वाग्भवं बीजमुच्चार्य गलानुग्रहबिन्दुभिः।
नादेन भूषितं बीजं पार्थिवं चोच्चरेत् ततः॥
पुनराद्यं नमश्चान्ते भगवतिपदं लिखेत्।
वार्त्तालियुग्मं वाराहि पुनरेतद् द्वयं लिखेत्॥
वराहमुखि च द्वन्द्वं सन्धिहीनं ततः परम्।
अन्धे चान्धिनि सप्तार्णो हृदन्तेन भवेत् प्रिये॥
रुन्धे रुन्धिन्यतो हृच्च भञ्जे भञ्जिनि हृत् तथा।
मोहे मोहिनि हृच्चापि स्तम्भे स्तम्भिनि हृत् ततः॥
एतदुक्त्वा महेशानि सर्वदुष्ट-प्रदुष्ट च।
सानन्तं नां च सर्वेषां सर्ववागपि चित्त च॥
चक्षुर्मुखगति-प्रोक्त्वा जिह्वास्तम्भं कुरु द्वयम्।
शीघ्रं वश्यं कुरु द्वन्द्वं वाग्भवं पार्थिवं पुनः॥

ठकारस्य चतुष्कान्ते कवचास्त्राग्निवल्लभा ।
चतुर्दशोत्तरशतं मन्त्रार्णानां भवेत् प्रिये ॥

गलेति स्वरूपम् । ततश्च ग्लौमित्येव पार्थिवं बीजम् । वराहमुख्यन्धे इति सन्धिहीनं अन्धेन्धिनि इति सन्धिव्यावृत्तये सप्तार्णो हृदन्तेनेत्युक्तम् । प्रदुष्टेति पदम् । अनन्त आकारस्तेन सहितं प्रदुष्टा इति । नामिति स्वरूपम् । पुनः पार्थिवं वाग्भवं ग्लौमिति । स्पष्टमन्यत् । सेयं वाराही । 'मन्त्रमहोदधौ' तु अमृतपीठेशी सुधाश्चामृतेश्वरी सिद्धलक्ष्मी-सिद्धिमन्त्र-स्त्वतिक्षिप्ता-क्षरतयोक्तास्ते तत्रैव द्रष्टव्याः ।

॥ समाप्तं पञ्चपञ्चिका-प्रकरणम् ॥

ततो दर्शनानि पूजयेत् । यथा–

[ अथ दर्शन-पूजा ]

ॐ ह्रौं नमः शिवाय शैवदर्शनश्रीपादुकां पूज० त० (बिन्दौपरितः) । ह्रीं, शाक्तदर्शनश्रीपा० पू० त० । ॐ ब्राह्मदर्शनश्रीपा० पू० त० (इति भूबिम्बे) । ॐ नमो नारायणाय, वैष्णवदर्शनश्रीपा० पू० त० (इति शैवदर्शनवामभागे) । ह्रीं हंसः, सूर्यदर्शनश्रीपा० पू० त० (सृष्टिचक्रे) । ॐ तारे तुत्तारे तुरे स्वाहा, बौद्धदर्शनश्रीपा० पू० त० (स्थितिचक्रे) । इति सम्पूज्य परितः श्रीविद्यां सम्पूज्य पूर्ववत् त्रिः सन्तर्पयेत् । शैव-ब्राह्म-वैष्णवदर्शन-मन्त्रास्तु 'क्रमोत्तमे'–

ॐ ह्रौं नमः शिवायेति शैवदर्शनमर्चयेत् ।
वेदादिनाऽर्चयेत् तत्र ब्रह्माणं कमलासनम् ॥
नारायणाष्टाक्षरतो वैष्णवं तत्र पूजयेत् ॥ इति ।

सूर्यमन्त्रो मूल एवोक्तः । शाक्तदर्शनमन्त्रोऽपि प्रसिद्धः । तारामन्त्रस्तु कल्पसूत्रे उक्तः ।

ततः छत्र-चामरादर्शपादुकादि राजोपचारान् समर्प्य पूर्वोक्ता नव मुद्राः प्रदर्शयेत् । अत्र च–'एवं सम्पूज्य कलशं श्रीविद्यां परितो यजेत्' इति मूलग्रन्थो व्याख्यातचरः । 'सर्वोपचारैराराध्य मुद्राः सन्दर्शयेत् क्रमात्' इत्यत्र सर्वोपचारशब्देन छत्र-चामराद्युपचारा गृह्यन्ते । ततो नवावरण-पूजामारभेत । तत्रादावङ्गावरणं पूजयेदिति ।

[ अङ्गावरण-पूजा ]

अत्र सर्वत्र प्राच्याग्नेयादि-दिग्विभागः –

**उत्तराशामुखो देवि यदा चक्रं समुद्धरेत् ।**
**उत्तराशा तदा देवि पूर्वा सैव न संशयः ॥**

इत्युक्तप्रकारेण ज्ञेयः । बिन्दुचक्रोत्तर-समीपवर्त्ति-नित्यामण्डलपूजनायुध-पूजनदेशयोरन्तराले–

ह्रीं श्रीं क ४ हृदयाय नमो हृदयशक्तिश्रीपा॰ पू॰ त॰ (इत्यग्निकोणे)। ह्रीं श्रीं ह ५ शिरसे स्वाहा शिरःशक्तिश्रीपा॰ पू॰ त॰ (ईशकोणे) । ह्रीं श्रीं स ३ शिखायै वषट् शिखाशक्तिश्रीपा॰ पू॰ त॰ (आसुरकोणे) । २ क ४ कवचाय हुम्, कवचशक्तिश्री॰ पू॰ त॰ (वायव्यकोणे) । २ ह ५ नेत्रत्रयाय वौषट् नेत्रशक्तिश्रीपा॰ पू॰ त॰ (मध्ये) । २ स ३ अस्त्राय फट् अस्त्रशक्तिश्रीपा॰ पू॰ त॰ (इति चतुर्दिक्षु) । इति सम्पूज्य–

'एता अङ्गदेवताः समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तु' इति सामान्यार्घोदकेन प्रधाने समर्पयेत् । अत्र च यद्यपि–

**अथाङ्गावरणं कुर्याच्छ्रीविद्यामनुसम्भवम् ।**
**अग्नीशासुरवायव्य-मध्ये दिक्ष्वङ्गपूजनम् ॥**

इति सामान्येन स्थलनिर्देशं विनैव पूजनमुक्तम्, तथापि–

**'षडङ्गावरणाद् बाह्यसमीपे क्रमतोऽर्चयेत्' ।**

इत्यनेन मूले संहितायां च –

**'अङ्गावरण-बाह्ये तु आयुधाष्टकमर्चयेत्' ।**

इत्यनेन च सर्वसिद्धिप्रदे चक्रे वक्ष्यमाणायुधपूजायां षडङ्गावरणापेक्षया बाह्यदेशस्याधिकरणत्वविधानबलाद् बिन्दुचक्रोत्तर-समीपवर्त्ति-नित्या-मण्डल-पूजनायुधपूजनदेशयोरन्तरालदेशोऽधिकरणत्वेनाङ्गपूजासु गम्यत इति न दोषः ।

ततश्च तत्रैव सर्वसिद्धिप्रदे चक्रे आयुधपूजोत्तरं पूर्वं वाऽङ्गपूजा-मिच्छन्ति तन्त्रान्तरानुरोधेन केचित्, तथापि–

**'परिवारार्चनं पश्चादादावङ्गावृतिः प्रिये !**

इति प्राकृतवचनविहिते परिवारार्चनपूर्वक्रमेऽतिदेशप्राप्तेऽपि नित्यादि-परिवारार्चनाऽऽनन्तर्यविधानतात्पर्यकेण 'अथाङ्गावरणं कुर्या'दित्यनेन

श्रौतक्रमविधायकेन दर्शनपूजाऽऽनन्तर्यरूपक्रमविधानात् तदुत्तरमेवानुष्ठानं युक्तम् । तत्राङ्गावरणमिति नामातिदेशेनेतरावरणधर्माणां समर्पणरूपाणामनुक्तानामपि लाभः । वचनेनाङ्गावरणमित्युक्तेरेव प्रमाणत्वात् ।

**'समस्तचक्रचक्रेशीयुते देवि नवात्मिके' ।**

इति मन्त्रे 'चक्र-चक्रेशीयुत'त्वापेक्षया नवात्मकत्वस्य प्रधानेऽभिधानात् । अतः श्रीविद्यायां नवावरणानि न सन्तीति प्रवादोऽपि निर्मूल एवेति ध्येयम् । तथा–

**मायालक्ष्मीमयं बीजयुग्मं पूर्वक्रमेण तु ।**
**तारमायारमाबीजमथवा सुरवन्दिते ॥**
**कंथितं यो जपेद् देवि त्रयं वा परमेश्वरि ।**
**संयोज्य योजयेत् सर्वाः क्रमादेवं वरानने ॥**

इत्यनेन मूलकृता द्वितार-त्रितार-पूर्वप्रयोगस्य पूजन एव विधानान्न्यासादिष्वन्यैस्तथाविधप्रयोगो लिखितोऽपि मया न लिखितः । यद्यपि 'सर्वाः पूजये'दित्युक्तम्, तथापि सर्वशब्दस्य सङ्कोचावश्यकत्वेऽथाङ्गावरणं कुर्यादित्युपक्रम्यैतस्याम्नानात् प्रकरणादावरणदेवता एव सर्वशब्देन गृह्यन्त इति नावरण-प्राक्कालीन-देवता-पूजासु तत्प्रसक्तिरिति ध्येयम् ।

**॥ इति प्रथमावरणम् ॥**

ततश्चतुरस्रे प्रकटयोगिनीः पूजयेत् । यथा–

ह्रीं श्रीं अणिमसिद्धिश्रीपा० पू० त० (इति पश्चिमद्वारदक्षिणभागे) । २ लघिमसिद्धिश्रीपा० पू० त० (इत्युत्तरद्वारपश्चिमभागे) । २ महिमसिद्धिश्रीपा० पू० त० (इति वायव्यदक्षिणभागे) । २ ईशित्वसिद्धिश्रीपा० पू० तं० (इति दक्षिणद्वारपूर्वभागे) । २ वशित्वसिद्धिश्रीपा० पू० त० (इति पूर्वद्वारोत्तरभागे) । २ प्राकाम्यसिद्धिश्रीपा० पू० त० (इति ईशपश्चिमभागे) । २ भुक्तिसिद्धिश्रीपा० पू० त० (इत्याग्नेयोत्तरभागे) । २ इच्छासिद्धिश्रीपा० पू० त० (इति निर्ऋतिपूर्वभागे) । २ प्राप्तिसिद्धिश्रीपा० पू० त० (इत्यधः) । २ सर्वकामसिद्धिश्रीपा० पू० त० (इत्यूर्ध्वम्) ।

ततः–२ ब्राह्मी-श्रीपा० पू० त० (इति पश्चिमद्वारमध्ये) । २ मोहश्वरीश्री० (इत्युत्तरद्वारमध्ये) । २ ऐन्द्रीश्री० (इति पूर्वद्वारमध्ये) । २ कौमारीश्री० (इति दक्षिणद्वारमध्ये) । २ वैष्णवीश्रीं० (इति

वायव्यकोणे)। २ वाराहीश्री॰ (इतीशानमध्ये) । २ चामुण्डाश्री॰ (इत्याग्नेयमध्ये) । २ महालक्ष्मीश्री॰ (इति निर्ऋतिमध्ये) ।

ततः २ संक्षोभणमुद्राशक्तिश्रीपा॰ पू॰ त॰ (इति पश्चिमद्वार-वामभागे) २ द्रावणमुद्राश्री॰ (उत्तरद्वारपूर्वभागे) । २ आकर्षणमुद्राश्री॰ (पूर्वद्वारदक्षिणभागे) । २ वश्यमुद्राश्री॰ (दक्षिणद्वारपश्चिमभागे) । २ उन्मादमुद्राश्री॰ (वायव्योत्तरभागे) । २ महाङ्कुशामुद्रा॰ (ईशपूर्वभागे) । २ खेचरीमुद्रा॰ (आग्नेयदक्षिणभागे) । २ बीजमुद्रा॰ (निर्ऋतिपश्चिम-भागे) । २ योनिमुद्रा॰ (अधः) । २ त्रिखण्डामुद्रा॰ (ऊर्ध्वम्) ।
इति सम्पूज्य अणिमसिद्धिंपुरतः 'अं आं सौः त्रिपुराचक्रेश्वरीश्रीपा॰ इति सम्पूज्य, द्रां सर्वसंक्षोभिणीमुद्रां प्रदर्श्य—'एताः प्रकटयोगिन्यः त्रैलोक्य-मोहनचक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तु' इति सामान्योदकेन प्रधाने समर्पयेत् ।

यद्यपि अत्र त्रिरेखात्मकं चतुरस्रं मत्वा तिसृषु रेखासु देवतात्रय-देवतात्रय-पूजनमिच्छन्ति बहवस्तथापि मूलकृता चक्रोद्धारप्रसङ्गे एक-रेखात्मकचतुरस्रस्यैवाभिधानादिहापि—'चतुरस्रे चतुर्द्वारि योगिन्यः सिद्धि-दायिकाः' इत्येकवचनोपादानाद् रेखात्रययुतं चतुरस्रं नास्त्येवेति तन्निरपेक्षं पूजनमुक्तम् । संहितायामपि रेखात्रयनिरपेक्षं पूजनमुक्तम् । एतावान् परं संहितायां विशेषः, यन्मुद्रानिरपेक्षं द्वारदक्षिणभागेषु सिद्धीनां वामभागे मातॄणां पूजनं कृत्वाऽणिमासिद्धिपुरतः चक्रेश्वरीः सम्पूज्य तद्दक्षेऽणिमा-पूजनम् । तद्वामे मुद्रापूजनम् । एवमेवाग्रिमचक्रेष्वपीति ।

मूलकृता तु—

**'अणिमां पश्चिमद्वार-दक्षभागे प्रपूजयेत्' ।**

इत्यादिना सिद्धीनां पूजनमुक्त्वा—

**ब्राह्मी माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा ।**
**वाराही तत्त्वतः षष्ठी चामुण्डा सप्तमी भवेत् ॥**
**अष्टमी च महालक्ष्मीः पश्चिमादि क्रमेण हि ॥**

इत्यनेन 'मातृपूजनं' चोक्त्वा—

**'संक्षोभ-द्रावणाकर्ष-वश्योन्माद.........महाङ्कुशा' ॥**

इत्यनेन मुद्रापूजाया एकदा विधानाच्चक्रेश्वरीपूजन-मुद्रादर्शनमात्रेणैवोप-संहृतम् । अत्र यद्यपि निवेदनमन्त्रो मूलेनोक्तस्तथापि—

**'सर्वविद्राविणीं मुद्रां दर्शयित्वा निवेदयेत्' ।**

तथा—

'वश्यमुद्रां प्रदर्श्याथ निवेद्य तदनन्तरम्' ॥

इत्यत्र निवेदनस्य विधाने तन्मन्त्रोऽप्युक्तप्राय एव । स चोद्धृतः 'तत्त्वविंशिका'याम्—

एताः प्रकटयोगिन्य इति त्रैलोक्यमोहने ।
चक्रे समुद्रा इति ससिद्धयः सायुधास्ततः ॥
सवाहनाः सवर्णाद्याः परीवारास्ततः परम् ।
सर्वोपचारैः सम्पूजिताः सन्त्विति मनुं जपन् ॥
अर्घ्योदकाक्षतैर्मूलदेव्यै पूजां समर्पयेत् ।
तथैता गुप्तयोगिन्यः सर्वाशापरिपूरके ॥
चक्रे समुद्रा इत्यादि पूर्ववन्मनुनाऽमुना ।
समर्प्य मूलदेव्यै तां पूजामर्घोदकादिभिः ।
एता गुप्ततरेत्युक्त्वा योगिन्य इति शब्दितः ॥
सर्वसंक्षोभवर्णान्ते कारके चक्र इत्यपि ।
समुद्रा इति सर्वं च पूर्ववत् परियोजयेत् ॥
एताः पदं समुद्धृत्य सम्प्रदायपदोपरि ।
योगिन्यः सर्वसौभाग्यदायके चक्र इत्यपि ॥
समुद्रेत्यादि-सर्वं च पूर्ववत् परियोजयेत् ।
एताः कुलकौलयोगिन्यस्तथा सर्वार्थचक्रके ।
चक्रे समुद्रा इत्यादि पूर्ववत् परियोजयेत् ॥
एता निगर्भयोगिन्यः सर्वरक्षाकरे पदात् ।
चक्रे समुद्रा इत्यादि पूर्ववत् परियोजयेत् ॥
एता रहस्ययोगिन्यः सर्वरोगहरे पदात् ।
चक्रे समुद्रा इत्यादि पूर्ववत् परियोजयेत् ॥
एषा परापरेत्युक्त्वा रहस्येति पदोपरि ।
योगिनी च समुद्धृत्य सर्वानन्दमये पदात् ॥
महाचक्रे बैन्दवे च परब्रह्मस्वरूपिणी ।
परामृतपदाच्छक्तिः सर्वचक्रेश्वरीपदम् ॥
सर्वयन्त्रेश्वरीशब्दात् सर्वमन्त्रेश्वरीपदम् ।
सर्ववीरेश्वरीशब्दात् सर्वपीठेश्वरीपदम् ॥

सर्वयोगेश्वरीशब्दात् सर्ववागीश्वरीपदम् ।
सर्वसिद्धेश्वरी सर्वजगदुत्पत्तिमातृका ॥
सचक्राऽऽसना समुद्रा ससिद्धिः सवाहना ।
सपरीवारा च सर्वोपचारैर्महापदात् ॥
परापर-तृतीयान्ते सपर्यान्ते तथाविधा ।
पूजिताऽस्त्वित्यनेनैव देव्यै पूजां समर्पयेत् ॥ इति ।

'विशुद्धेश्वर'तन्त्रे तु–

एता रहस्ययोगिन्यः सर्वसिद्धिप्रदे तथा ।
समुद्राश्च ससिद्धयः सायुधाश्च सशक्तिकाः ॥
सर्वोपचारैः पूजितास्तु तथा सन्त्वन्ततर्पिताः ।
प्रतिचक्रं प्रपूज्यैवं बिन्दौ सोदकमर्पयेत् ॥ इति ।

अत्र चार्घोदकशब्देन सामान्योदकमेवोच्यते, प्रधानतर्पण एवोपयुक्तत्वात्। अत्र यद्यपि 'तत्त्वविंशिका'यां सर्वसिद्धिप्रदचक्रनिवेदन-मन्त्रो नोक्तस्तथापि सामान्यन्यायत्वान्मन्त्र ऊहनीयः । अत्र च 'तत्त्वविंशिका'यां 'जगदुत्पत्तिमातृके'त्यस्यानन्तरं 'सचक्रासने'त्यादि गद्यरूपेण पठितं ज्ञेयम् ।

॥ इति द्वितीयावरणम् ॥

ततः षोडशारे पश्चिमादि-वामावर्त्तेन–

२ अं कामाकर्षिणी-नित्याकलाश्रीपा० पू० त० । २ आं बुद्ध्याकर्षिणी-नित्याकलाश्रीपा० पू० त० । २ इं अहङ्काराकर्षिणी-नि० पू० त०। २ ईं शब्दाकर्षिणी-नि० पू० त० । २ उं स्पर्शाकर्षिणी-नि० पू० त० । २ ऊं रूपाकर्षिणी-नि० पू० त० । ऋं रसाकर्षिणी-नि० पू० त० । ॠं गन्धाकर्षिणी-नि० पू० त० । ऌं चित्ताकर्षिणी-नि० पू० त० । ॡं धैर्याकर्षिणी-नि० पू० त० । एं नामाकर्षिणी-नि० पू० त० । ऐं बीजाकर्षिणी-नि० पू० त० । २ ओं अमृताकर्षिणी-नि० पू० त० । २ औं स्मृत्याकर्षिणी-नि० पू० त० । २ अं शरीराकर्षिणी-नि० पू० त० । २ अः आत्माकर्षिणी-नि० पू० त० ।

इति सम्पूज्य कामाकर्षिण्यग्रतः 'ऐं क्लीं सौः त्रिपुरेशीचक्रेश्वरीश्रीपा० पू० त०' इति सम्पूज्य द्रीं सर्वविद्राविणीमुद्रां प्रदर्श्य–'एता गुप्तयोगिन्यः सर्वाशापूरके चक्रे०' इत्यादि सामान्योदकेन प्रधाने तर्पयेत् ।

॥ इति तृतीयावरणम् ॥

ततोऽष्टदले सर्वसंक्षोभणचक्रे–

२ कं ४ अनङ्गकुसमाश्री॰ पू॰ त॰ (इति प्राच्याम्)। २ चं ४ अनङ्गमेखलाश्री॰ पू॰ त॰ (दक्षिणस्याम्)। २ टं ४ अनङ्गमदनाश्री॰ पू॰ त॰ (पश्चिमायाम्)। २ तं ४ अनङ्गमदनातुराश्री॰ पू॰ त॰ (उत्तरस्याम्)। २ पं ४ अनङ्गरेखाश्री॰ पू॰ त॰ (वह्निकोणे)। २ यं ३ अनङ्गवेगाश्री॰ पू॰ त॰ (राक्षसे)। २ शं ३ अनङ्गाङ्कुशाश्री॰ पू॰ त॰ (वायव्ये)। २ ळं १ अनङ्गमालिनीश्री॰ पू॰ त॰ (ईशान्ये)।

इति सम्पूज्य अनङ्गकुसुमाग्रे–'ह्रीं क्लीं सौः त्रिपुरसुन्दरीचक्रेश्वरीश्री॰ पू॰ त॰' इति सम्पूज्य क्लीं सर्वाकर्षिणीमुद्रां प्रदर्श्य 'एता गुप्ततरयोगिन्यः सर्वसंक्षोभणचक्रे' इत्यादि सामान्योदकेन प्रधाने समर्पयेत्।

॥ इति चतुर्थावरणम् ॥

ततः सर्वसौभाग्यदायके चतुर्दशारे पश्चिमादिवामावर्त्तेन–

२ सर्वसंक्षोभिणीशक्तिश्री॰ पू॰ त॰। २ सर्वविद्राविणीशक्तिश्री॰। २ सर्वाकर्षिणीशक्तिश्री॰। २ सर्वाह्लादकरीशक्तिश्री॰। २ सर्वसम्मोहिनी-शक्तिश्री॰। २ सर्वस्तम्भनकारिणीशक्तिश्री॰। २ सर्वजम्भनिकाशक्तिश्री॰। २ सर्ववशंकरीशक्तिश्री॰। २ सर्वार्थरञ्जिनीशक्तिश्री॰। २ सर्वोन्मादि-निकाशक्तिश्री॰। २ सर्वार्थसाधिकीशक्तिश्री॰। २ सर्वसम्पत्तिपूरिणीशक्ति-श्री॰। २ सर्वमन्त्रमयीशक्तिश्री॰। २ सर्वद्वन्द्वक्षयङ्करीशक्तिश्री॰।

इति सम्पूज्य सर्वसंक्षोभिण्यग्रतः 'हैं हस्क्लीं हसौः त्रिपुरवासिनीचक्रेश्वरी-श्री॰' इति सम्पूज्य, ब्लूं वश्यमुद्रां प्रदर्श्य–'२ एताः सम्प्रदाययोगिन्यः सर्वसौभाग्यदायके चक्रे॰' इत्यादि सामान्योदकेन समर्पयेत्।

॥ इति पञ्चमावरणम् ॥

ततः सर्वार्थसाधके चक्रे दशारे पश्चिमादि-वामावर्त्तेन–

२ सर्वसिद्धिप्रदादेवीश्री॰ पू॰ त॰। २ सर्वसम्पत्प्रदादेवीश्री॰। २ सर्वप्रियङ्करीदेवीश्री॰। २ सर्वमङ्गलकारिणीदेवीश्री॰। २ सर्वकाम-प्रपूर्णदेवीश्री॰। २ सर्वदुःखप्रमोचिनीदेवीश्री॰। २ सर्वमृत्युप्रशमनीदेवी-श्री॰। २ सर्वविघ्नविनाशिनीदेवीश्री॰। २ सर्वाङ्गसुन्दरीदेवीश्री॰। २ सर्व-सौभाग्यदायिनीदेवीश्री॰।

इति सम्पूज्य, सः उन्मादमुद्रां प्रदर्श्य–'२ एताः कुलयोगिन्यः सर्वार्थ-साधके चक्रे॰' इत्यादि प्रधाने सामान्योदकेन समर्पयेत्।

॥ इति षष्ठावरणम् ॥

ततः सर्वरक्षाकरे चक्रे द्वितीयदशारे पश्चिमादिवामावर्त्तेन–

२ सर्वज्ञाशक्तिदेवीश्रीपा० पू० त० । २ सर्वशक्तिदेवीश्री० । २ सर्वैश्वर्यप्रदादेवीश्री० । २ सर्वज्ञानमयीदेवीश्री० । २ सर्वव्याधिप्रशमनीदेवीश्री० । २ सर्वाधारस्वरूपादेवीश्री० । २ सर्वपापहरादेवीश्री० । २ सर्वानन्दमयीदेवीश्री० । २ सर्वरक्षास्वरूपिणीदेवीश्री० । २ सर्वेप्सितार्थफलदादेवीश्री० ।

इति सम्पूज्य, सर्वज्ञादेव्यग्रे 'ह्रीं क्लीं ब्लें त्रिपुरमालिनीचक्रेश्वरीश्रीपा० पू० त०' इति सम्पूज्य क्रौमिति महाङ्कुशामुद्रां प्रदर्श्य '२ एता निगर्भयोगिन्यः सर्वरक्षाकरे चक्रे०' इत्यादि प्रधाने सामान्योदकेन समर्पयेत् ।

॥ इति सप्तमावरणम् ॥

ततः सर्वरोगचक्रेऽष्टारे पश्चिमादि-विलोमेन–

२ अं १५ ब्लूँ वशिनीवाग्देवताश्रीपा० पू० त० । २ कं ४ कलह्रीं कामेश्वरीवाग्देवताश्री० । २ चं ४ न्व्लीं मोदिनीवाग्देवताश्री० । २ टं ४ य्लूं विमलावाग्देवताश्री० । २ तं ४ ज्म्रीं अरुणावाग्देवताश्री० । २ पं ह्स्ल्व्यूं जयिनीवाग्देवताश्री० । २ यं ३ झ्म्र्यूं सर्वेश्वरीवाग्देवताश्री० । २ शं ५ क्ष्म्रीं कौलिनीवाग्देवताश्री० ।

इति सम्पूज्य वशिन्यग्रे '२ ह्स्रैं ह्स्क्ल्ह्रीं ह्सौः त्रिपुरासिद्धाचक्रेश्वरीश्रीपा० पू० तर्पयामि' इति सम्पूज्य, ह्स्खें खेचरीमुद्रां प्रदर्श्य, '२ एता रहस्ययोगिन्यः सर्वरोगहरे चक्रे०' इत्यादि प्रधाने सामान्योदकेन समर्पयेत् ।

॥ इत्यष्टमावरणम् ॥

ततः सर्वसिद्धिप्रदचक्रीयत्रिकोणरेखाणामान्तरभागे पश्चिमादिचतुर्दिक्षु क्रमेण षडङ्गावरणाद् बाह्यदेशे–

द्रां द्रीं क्लीं ब्लूं सः कामेश्वर-कामेश्वरी-जम्भनबाणदेवताश्रीपा० पू० त० (पश्चिमायाम्) । २ धं थं कामेश्वर-कामेश्वरी-मोहनचापदेवताश्रीपू० त० (उत्तरे) । २ आं ह्रीं कामेश्वर-कामेश्वरी-वशीकरण-पाशदेवताश्री० (इति पूर्वे ) । २ क्रौं क्रौं स्तम्भन-कामेश्वर-कामेश्वर्यङ्कुशदेवताश्री० (इति दक्षिणे) ।

सम्पूज्य स्वाग्रतो वामावर्त्तेन त्रिकोणेषु–

२ क ४ कामेश्वरीरुद्रशक्तिश्रीपा० पू० त० । (इत्यग्रकोणे) । २ ह ५ वैष्णवीवज्रशक्तिश्री० (इति दक्षकोणे) । २ स ३ भगमालाब्रह्मशक्तिश्री० (वामकोणे) ।

इति सम्पूज्य कामेश्वर्यग्रे ह्स्रीं ह्स्क्ल्रीं ह्स्रौंः त्रिपुराम्बाचक्रेश्वरीश्रीपा० पू० त० । इति सम्पूज्य, हसौः बीजमुद्रां प्रदर्श्य—२ एताः परापर-रहस्ययोगिन्यः सर्वसिद्धिप्रदचक्रे इति सामान्योदकेन प्रधाने समर्पयेत् ।

यद्यप्यन्यदेवतासु आयुधानां तत्तत् करेष्वेव पूजा दृष्टा, तथा-पीहायुधाभिमानिनीनां देवतानां पूजामात्रोक्तेश्चतुर्दिक्षु पूजोक्ता न विरुध्यते । अत्र च सर्वेऽप्येता अतिरहस्ययोगिन्य इति प्रयोगं लिखन्ति; परन्तु 'परापररहस्याख्या योगिनीः परिपूजयेत्' इति मूले । 'परापर-रहस्याख्या योगिनीः पूजयेत् क्रमा'दिति संहितायां परापररहस्ययोगिनीत्वेन सङ्कीर्त्तनात् तथैव प्रयोगो युक्तः ।

कथं तर्ह्येतासामपि परापररहस्ययोगिनीत्वे सर्वानन्दमयचक्रे पूजयिष्य-माण-प्रधानदेवतायाः 'परापररहस्याख्यां योगिनीं यजे'दिति परापररहस्य-योगिनीत्वव्यपदेश इति चेदुच्यते ।

अपरयोगिन्यपेक्षया रहस्याख्या, अपररहस्याख्या परा चासावपर-रहस्याख्येत्यर्थेन पररहस्ययोगिनीत्वकथन एव तात्पर्यात् । ततश्च यथैव गुरूणामपर-परापर-पर-विभेदेन त्रैविध्यमुक्तं प्राक्, तथाऽत्रापीति सङ्केतः ।

॥ इति नवमावरणम् ॥

इति नवावरणानि सम्पूज्य सर्वानन्दमये कामेश्वररूपे बिन्दुचक्रे मूलान्ते 'श्रीमहात्रिपुरसुन्दरीश्रीपा० पू० तर्पयामीत्युच्चार्याङ्गुष्ठमध्यमाऽना-मिकाग्रैर्मीलितैर्गन्धं दत्त्वा पुनर्मूलान्ते तथैवाक्षतान् दत्त्वा, अन्यान्यपि सुगन्धिद्रव्याणि तथैव समर्प्य पुनर्मूलान्ते 'महात्रिपुरसुन्दरीश्रीपा० पू० त०' इत्युच्चार्य, अङ्गुष्ठतर्जनीरूप-पुष्पमुद्रया पुष्पाणि दद्यात्। ततो मन्त्ररूपां षोडशार्णां श्रीविद्यां मुख्यषोडशीविद्यान्ते श्रीविद्याश्रीपा० पू० त० इत्युच्चार्य पूर्ववद् गन्धपुष्पाक्षतादि समर्पयेत् । अत्र च—

**'कूटत्रयं समुच्चार्य सर्वविद्यास्वरूपकम् ।**
**समस्तदेवतारूपम्...................... ॥ इत्यादि—**
**'उपचारैः समभ्यर्च्य गन्ध-पुष्पाक्षतादिभिः ।'**

इत्यन्तेन कूटत्रयात्मक-पञ्चदशी-षोडशार्णश्रीविद्यादेवतयोः पूजोच्यते । आदिशब्देन सुगन्धिद्रव्याण्युच्यन्ते । गन्धमुद्रा तूक्ता तन्त्रान्तरे–

**मध्यमाऽनामिकाङ्गुष्ठैरङ्गुल्यग्रेण पार्वति ।**

**दद्याच्च विमलं गन्धं मूलमन्त्रेण साधकः ॥ इति ।**

पुनस्तथैव चक्रेशीं महात्रिपुरत्रिपुरसुन्दरीं सम्पूज्य मूलान्ते महात्रिपुरसुन्दरीं तर्पयामीत्युच्चार्य त्रिः सन्तर्प्य 'ऐं' योनिमुद्रां समर्प्य पूर्वोक्ता नव मुद्राः प्रदर्शयेत् । अत्र च–

**सर्वानन्दमये चक्रराजे बैन्दवसंज्ञके ।**

**ब्रह्मरूपे चित्स्वरूपे संविद्वेद्ये शृणु प्रिये ॥**

इत्यादिना पूर्वोक्तावरणापेक्षया 'वैविध्यद्योतनार्थं शृणु प्रिय' इत्यादिशब्दघटितेन सङ्ग्रथनेन केवलं प्रधानपूजनस्वातन्त्र्येणावरणान्तेऽभिधीयते । अत एव 'योनिमुद्रां प्रदर्श्यार्थे'त्यादिना चक्रपूजा-निवेदनं विनैव मुद्रामात्रप्रदर्शनविधानमपि इतरावरणापेक्षया वैलक्षण्यद्योतकं दृश्यते । एवं स्थिते सर्वानन्दमयचक्रपूजामन्तर्भाव्य नवावरणमिच्छन्तः परास्ताः । अतोऽङ्गावरणेनैव नवावरणत्वमिति तत्त्वम् ।

**[धूप-दीपादि-विधानम्]**

ततो दशाङ्गादिधूपं प्रज्वाल्य पात्रं वामेन संस्पृश्य सामान्यार्घोदकं गृहीत्वा मूलं हृदि स्मृत्वा–

**वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥**

महात्रिपुरसुन्दरीपादुकां पूजयामीत्युच्चार्य जलं क्षिप्त्वा मध्यमाऽनामिकाऽङ्गुष्ठाग्रैर्मीलितैर्धूपं प्रदर्श्य मध्यमानामिका-मध्यपर्वणोरङ्गुष्ठाग्रेण धूपपात्रमुत्तोल्य नीचैस्तिर्यगध ऊर्ध्वं क्रमेण सार्द्धं त्रिः सञ्चाल्य देवीवामे स्थापयेत् । दशाङ्गधूपस्तु–

**'दशाङ्गाद्यैर्धूपमयैर्धूपयेत् परमेश्वरीम्' ।**

इति मूले उक्तः । दशाङ्गलक्षणं च–

**मधु मुस्तं घृतं गन्धो गुग्गुल्वगरुशैलजम् ।**

**सरलं सिद्धं सिद्धार्थं दशाङ्गो धूप इष्यते ॥**

इत्युक्तं तन्त्रान्तरे । तत्रैव–

**मध्यमानामिकाङ्गुष्ठैरङ्गुल्यग्रेण पार्वति ।**

**दद्याच्च विमलं गन्धं मूलमन्त्रेण साधकः ॥**

अङ्गुष्ठतर्जनीभ्यां तु चक्रे पुष्पं निवेदयेत् ।
यथा गन्धं तथा देवि धूपं दद्याद् विचक्षणः ॥
मध्यमानामिकाभ्यां तु मध्यपर्वणि देशिकः ।
अङ्गुष्ठाग्रेण देवेशि धृत्वा धूपं निवेदयेत् ॥

उत्तोलनं त्रिधा कृत्वेति । अत्र च मूले पञ्चमपटले–

धूपं विस्तारयन् सम्यङ् मूलमन्त्रं हृदि स्मरन् ।

इति मूलकृता मूलमन्त्रस्मरणमात्रमेव विहितमिति नोच्चारणं तस्येति ज्ञेयम् ।

ततश्चक्रे वेदिकामभितः कर्पूरवर्त्तिकायुतां घृतस्तुतां तैलप्लुतां दीपमालां कृत्वा सामान्योदकेन मूलान्ते–

सुप्रकाशा महादीपा सर्वतस्तिमिरापहाः ।
सबाह्याभ्यन्तरं ज्योतिर्दीपमालेयं गृह्यताम् ॥

महात्रिपुरसुन्दरीश्रीपा॰ पूजयामीत्युच्चार्य, उच्चैरारोप्य प्रदर्श्य स्थापयेत् । अत्र च–

'अभितो वेदिकाचक्रं दीपमालां घृतप्लुताम्' ।

इत्यनेन दीपमाला-विधानात् प्रकृतिप्राप्त-'सुप्रकाश' इति मन्त्रस्य प्रतिदीप-मुच्चारणासम्भवात् पूर्वोक्तमालापर ऊहोऽथवा बहुवचनान्त ऊहो द्रष्टव्यः । ततस्त्रिमूलान्ते–'महात्रिपुर॰ तर्पयामीति' तर्पयेत् । ततोऽति-देशप्राप्तमारात्रिकं कुर्यात् । यथा–

सुवर्ण-राजत-कांस्यान्यतम-निर्म्मितस्थालके कुङ्कुमेनाष्टदलं पद्मं विरच्य कर्णिकायां शुद्धचरुणा चन्द्ररूपं मण्डलं कृत्वा तत्रैकं दीपमष्टसु दलेषु चणकान्वितमुद्रासु यव-गोधूमादि-रचितान् शर्करायुतान् घृतपूरिता-नष्टौ दीपान् संस्थाप्य–'श्रीं ह्रीं ग्लूं स्लूं प्लूं म्लूं न्लूं ह्रीं श्रीं' इति नवाक्षर्य्या रत्नेश्वर्य्याऽभिमन्त्र्य मूलेनाभ्यर्च्य तत्स्थालकं पुनः पुनरा-मस्तकान्तं समुद्धृत्य नववारं मूलान्ते–

समस्तचक्रचक्रेशीयुते देवि नवात्मिके ।
आरात्रिकमिदं देवि गृहाण मम सिद्धये ॥

इत्युच्चार्य परिभ्राम्य स्थापयित्वा चक्रमुद्रां प्रदर्शयेत् । रत्नेश्वरी चोद्धृता मूले–

श्रीबीजं च पराबीजं संलिख्य वरवर्णिनि ।
गसौ च पमनाः पश्चादिन्द्रस्थाः क्रमतः प्रिये ॥

कामकर्णसमायुक्ता बिन्दुनाद-विभूषिता ।
बीजपञ्चकमेतत् तु पञ्चरत्नानि सुन्दरि ॥
पूर्वबीजविलोमेन रत्नेशीयं नवाक्षरी ॥ इति ।

चक्रमुद्रा-लक्षणं च–

वामहस्ताङ्गुष्ठमध्ये कनिष्ठां दक्षिणां यजेत् ।
कनिष्ठागर्भके वामे दक्षाङ्गुष्ठं विनिक्षिपेत् ॥
अन्योन्ययोगतो देवि चक्रमुद्रेयमीरिता ॥ इति ।

यद्यपि एतादृशमारात्रिकं बालातिदेशे नैवं प्राप्तमिति–

'आरात्रिकविधिं कुर्यात् पूर्ववद् देववन्दिते' ।

इति मूले पूर्ववदिति वचनं व्यर्थमिव, तथापि वक्ष्यमाणकाम्यारात्रिकानुष्ठाने गोदोहनेन चमसस्येव बाधो नित्यारात्रिकस्य मा भूदित्येतदर्थम् । ततश्च नित्यारात्रिककाम्यारात्रिकयोः समुच्चय इति ।

काम्यारात्रिकं यथा–

स्वर्णादिनिर्मिते पात्रे कुङ्कुमेनाष्टौ चक्राणि मध्ये चैकमिति नव चक्राणि विरच्य शर्करागर्भित-मण्डकद्वयस्य मेलनेन सप्तानामेका घटिका एवं सप्त घटिका नव चक्रेषु संस्थाप्य तदुपरि शुद्धतन्दुलनिर्मित-चरुगोलाँश्चक्ररूपान् संस्थाप्य तदुपरि चणकमुद्रा विकीर्य तत्र तत्र स्वस्तिकाकृति 'मुठे' इति भाषाप्रसिद्धं मुष्टिं संस्थाप्य घृतपाचितान् दीपान् प्रज्वाल्य 'ग्लूं स्लूं प्लूं म्लूं न्लूं' इति पञ्चरत्नैः सम्पूज्य पूर्वोक्त-पञ्चसिंहासनविद्यास्तेषु सम्पूज्य नववारमामस्तकं समुद्धृत्य 'समस्त-चक्र-चक्रेशी'ति पूर्वमन्त्रेण निवेद्य स्थापयेत् । दीपमालामयं तेजः स्वस्तिकं कल्याणरूपं प्रधाननेत्रयोर्ध्यायेत् ।

अत्र च षड्विंशत्यधिकशतसंख्या मण्डका भवन्ति, तथा चोक्तं मूले–

अन्यदारात्रिकं वक्ष्ये सर्वकामप्रपूरकम् ।

इत्यादिना–

शर्करागर्भरचितान् मण्डकान् युग्मरूपकान् ।
विरच्य घटिकाः कार्या योजयित्वा तु सप्तके ॥
सप्त सप्तप्रकारेण घटिका नव योजयेत् ॥ इत्यादि ।

ततो यथोपपन्नायुतं नानाव्यञ्जन-क्षीराज्यादिभरितं पात्रमग्रे संस्थाप्य वामेन संस्पृश्य दक्षिणहस्तेन सामान्यार्घजलं गृहीत्वा मूलान्ते–

**हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।**
**पञ्चधा षड्रसोपेतं गृहाण त्रिपुरेश्वरि ॥**

महात्रिपुरसुन्दरीश्रीपादुकां पूज० त० इत्युच्चार्य जलं प्रक्षिप्य तत्त्वमुद्रया नैवेद्यं दद्यात् ।

**'तत्त्वाख्यमुद्रया देवि नैवेद्यं तु निवेदयेत्' ।**

इति तन्त्रान्तरे । अत्र चातिदेशेनैव नैवेद्यप्राप्तौ पुनः 'नैवेद्यं षड्रसोपेतं सितापूपादिसंयुत'मित्यादिना विधानं मनःकल्पितरूपं वा त्रिपुरायै निवेदयेदिति प्रकृतौ विहितस्य विकल्पस्य निरासार्थम् । तेनाशक्तावपि मनःकल्पितरूपं न कर्त्तव्यं किन्तूक्तनैवेद्यपदार्थेषु मध्ये एकतरेणापि नैवेद्यदानमिति तात्पर्यार्थः ।

एवं नैवेद्यं सङ्कल्प्य मूलान्ते—प्राणाय० अपानाय० व्यानाय० उदानाय० समानाय स्वाहा । हृदयाय नमः स्वाहा । शिरसे स्वाहा स्वाहा । शिखायै वषट् स्वाहा । कवचाय हुम् स्वाहा । नेत्रत्रयाय वौषट् स्वाहा । अस्त्राय फट् स्वाहेत्युच्चार्य त्रिपुरेशान्यै होमयेत् ।

अत्र च प्रकृतौ नैवेद्य-निवेदनानन्तरं 'परिषिच्य ततो देवि नित्यहोमं समाचरे'दित्यनेन परिषिच्येत्याकाङ्क्षिताग्निमिति कर्मवाचकपदाध्याहारेणाग्न्यधिकरणको होमः पूर्वोक्तैः स्वाहान्तैर्मन्त्रैः पूजककर्त्तृको विहितस्तं बाधितुं सङ्कल्पानन्तरं स्वयं पूर्वोक्तान् मन्त्रानुच्चार्य देवताकर्त्तृको देवतामुखाधिकरणको होमः ।

**सङ्कल्प्य परमेशान्यै नित्यहोमविधिं यजेत् ।**
**मूलेन प्राणसहिता आहुतीः पञ्च होमयेत् ॥**
**षडाहुतीः षडङ्गानां नित्यहोमः प्रकीर्त्तितः ॥ इति ।**

अनेन श्राद्धीयब्राह्मणभोजनेष्विव मूलकृता विधीयते । होमयेदिति णिच्प्रयोगात् । 'नित्यहोमः प्रकीर्त्तितः' इति नित्यप्राकृतहोम-स्थानापत्त्यवगमाच्च । यदा त्वग्न्यधिकरणहोमस्यैव शिष्टानुष्ठानविषयत्वेन दर्शनान्नायमर्थः शिष्टाचार-सम्मत इत्यालोच्यते, तर्ह्यस्तु, अतिदेशप्राप्तानुवादकत्वं प्रमादपतितत्वं वास्य ग्रन्थस्येति ज्ञेयम् ।

ततः शिष्टाचाराद् राजोपचार-पूजनाच्च पानीयं तथा मूलानुक्तमपि संहितोक्तं सपूग-खदिरकर्पूरचूर्णपर्णं ताम्बूलं च तत्त्वमुद्रया दद्यात् । तत्त्वमुद्रया ताम्बूलदानं चोक्तं तन्त्रान्तरे—

**मूलेनाचमनं दद्यात् ताम्बूलं तत्त्वमुद्रया । इति ।**

अन्येऽपि होमानन्तरं यथाशक्ति जप-स्तुति-श्रीमच्छ्रीत्यादिश्लोकद्वय-करणक-नमस्कारादि-विशेषाः संहितायामुक्ता अपि मूलानुक्तत्वादिह न लिखिताः ।

[बलिदान-विधानम्]

ततः स्वासनादुत्थाय स्ववामभागे आसनान्तर उपविश्य भूजानुकोवहत्करोर्ध्वपुटः सन् सामान्यार्घजलेन चतुरस्रमण्डलमध्ये त्रिकोणवृत्तं व्योमनामकं मण्डलमालिख्य 'ऐं व्यापकमण्डलाय नमः' इति सम्पूज्य तस्मादासनादुत्थाय श्रीचक्रमभितो वहत्करोर्ध्वपुटितो भूजानुक ईशान-वह्नि-निर्ऋति-वायव्यकोणेषु चतुरस्रवृत्तं त्रिकोणात्मकं मण्डल-चतुष्टयं कृत्वा 'बं बटुकाय मण्डलाय० यां योगिनीमण्डलाय० गं गणेशमण्डलाय० क्षं क्षेत्रपालमण्डलाय०' इति सम्पूज्य तेष्वन्न-कलशोदक-पञ्चोपचारयुतानि चत्वारि पात्राणि क्रमेण संस्थाप्य दक्षहस्ते सामान्यजलमादाय–

'एह्येहि देवीपुत्र बटुकनाथ कपिलजटाभारभासुर त्रिनेत्र ज्वालामुख सर्वविघ्नान् नाशय २ सर्वोपचार-सहितं बलिं गृह्ण २ स्वाहा' इत्यमुं मन्त्रमुच्चार्य वामाङ्गुष्ठानामिकाभ्यां संस्पृश्योत्सृजेत् । ततः–

**ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा**
**पाताले वाऽनले वा पवनसलिलयोर्यत्र कुत्र स्थिता वा ।**
**क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन**
**प्रीता देव्यः सदा नः शुभबलिविधिना पातु वीरेन्द्रवन्द्याः ॥**

'यां योगिनीभ्यः स्वाहा, सर्ववर्णयोगिनी हुं फट् स्वाहा' इत्युच्चार्य दक्षाङ्गुष्ठानामिकाभ्यां संस्पृश्य वामहस्तेन सामान्यजलेन दद्यात् । ततः 'गां गीं गूं गणपतये वरवरद सर्वजनं मे वशमानय बलिं गृह्ण-गृह्ण स्वाहा' इत्युच्चार्य सरत्नमध्यमाकेन वाममुष्टिना संस्पृश्य दक्षेण सामान्यजलेन दद्यात् । ततः 'क्षां क्षीं क्षूं क्षैं क्षौं क्षः स्थानक्षेत्रपाल-धूपदीपादिसहितं बलिं गृह्ण-गृह्ण स्वाहा' इत्युच्चार्य सरलतर्जनीकेन वाममुष्टिना संस्पृश्य दक्षेण तेन जलेन दद्यात् ।

ततः कृतासने स्थित्वा पूर्वपूजितव्यापकमण्डले आधारं संस्थाप्य सम्पूज्य तत्रान्नोदकान्वितं पात्रं संस्थाप्य–'ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यः हूं स्वाहा' इति षोडशार्णमनुं त्रिरुच्चार्य तत्त्वमुद्रया संस्पृश्य दक्षेण तेन जलेन दद्यात् ।' पञ्चमण्डलकरणाशक्तौ–एकत्रैव व्यापक-मण्डले पञ्चबलीन् दद्यात् ।

अत्र च प्रकृतौ नित्यहोमानन्तरं बटुकादि-मण्डल-निर्माणपूर्वकं बलिदानं विहितमासीदिहाप्यतिदेशेन तथैव क्रमप्राप्तौ—

**उपविश्यासने रम्ये वामभागे ततः परम् ।**
**वहत्करोर्ध्वपुटितः साधको भुवि जानुकः ॥**
**मण्डलं चतुरस्रं तु तन्मध्ये विलिखेत् प्रिये ।**
**त्रिकोणवृत्तं व्योमाख्यं मण्डलं पूजयेत् ततः ॥**
**व्यापकान्ते मण्डलाय हृदन्तो वाग्भवं पराम् ।**
**मुखे कृत्वा योजनीयं मण्डलं मनुना प्रिये ॥**

इत्यादिनाऽपूर्वाङ्गविधानात् तदानन्तर्यं विधातुम् ।

**'एवं मण्डलमभ्यर्च्य मण्डलानां चतुष्टयम्' ।**

इति पुनर्वचनम् । तत्रापि—

**श्रीचक्रमभितो देवि त्रिकोणं व्योम आलिखेत् ।**
**पूर्वमन्त्रैः समभ्यर्च्य बटुकादिभिरद्रिजे ।**

इत्यनेन प्रकृतौ बालायां श्रीचक्रमभितो मण्डलानां त्रिकोणवृत्तरूपत्वाभिधानपूर्वकं पूर्व-पूर्वाक्षरघटित-बटुकादिनाममन्त्रैर्मण्डलपूजा विहितेति तदतिदेशेनैवेहापि मण्डलेषु श्रीचक्राभितोदेशीयेशानादिदिग्विभागादिप्राप्तावपि चतुरस्रमध्यस्थत्व—वहत्करोर्ध्वपुटित-भू-जानुकत्वादिगुणान् विधातुं च ।

**'ईशान-वह्नि-नैर्ऋत्य-वायुकोणेषु पूर्ववत्' ।**

इति वचनम् । तदा च चतुरस्र-वृत्त-त्रिकोणरूपमण्डलानामपूर्वाणां पूजाऽपि पूर्ववदपूर्वा भवेदिति संशय-निरासार्थं बटुकादि-सम्बन्धं ज्ञापयितुं 'मण्डलानि विधायाथ पूर्ववत् पूजयेत् प्रिये' । इति वचनं प्राकृत-बटुकादि-नाममन्त्रैः पूजां विधत्ते । येनैव क्रमेण मण्डलपञ्चकं लिखित्वा पूजितं तेनैव क्रमेण बलिदानमत्र प्रसज्ज्येतेत्याशङ्का निरासार्थं 'पूर्ववद् बलिदानं च दद्यात् सर्वसमृद्धये' इति वचनं प्राकृतमण्डलचतुष्टये आद्यं बलिदानचतुष्टयं बोधयति । प्रकृतौ च बटुक-योगिनी-क्षेत्रपाल-गणेशेति क्रमेण बलिषु देवता आसन् । अत्र च बटुक-योगिनी-गणेश-क्षेत्रपालेति क्रमेण प्राकृत-बलिदानानुवादेन देवताविधानार्थम् ।

**बटुकाय महेशानि योगिनीभ्यश्चैव वल्लभे ।**
**गणेश-क्षेत्रपालाभ्यां पूर्ववद् बलिमुत्सृजेत् ॥**

इति वचनम् । इति सकल-पूर्ववच्छब्दघटितवचनसार्थक्ये सति अतिदेशेनैव तत्तत्पदार्थप्राप्तौ तत्तद्वचनानि व्यर्थानीवेति कुशङ्का निरसनीयेति दिक् ।

बलिमन्त्रास्तूद्धृताः पञ्चमे पटले–

**एह्येहि देवीपुत्रान्ते बटुकान्तेऽथ नाथ च ।**
**कपिलान्ते जटाभारभासुरान्ते त्रिनेत्र च ॥**
**ज्वालामुख च सर्वान्ते विघ्नान् नाशय नाशय ।**
**सर्वोपचारसहितं बलिं गृह्ण द्विधा पदम् ॥**
**वह्नि-जायान्वितो मन्त्रो बटुकस्य उदाहृतः ।**

ऊर्ध्वं ब्रह्माण्डत इति स्पष्टः ।

**एतदन्ते महेशानि यां बीजं योगिनी ततः ।**
**भ्यः स्वाहा सर्ववर्णान्ते योगिनीपदमालिखेत् ॥**
**कवचं चास्त्रं संलिख्य वह्निजायां पुनर्लिखेत् ॥**

तथा–

**षड्दीर्घ-स्वर-सम्भिन्नं क्षकारं विलिखेत् प्रिये ।**
**स्थाने क्षेत्रपदं पाल-धूपदीपादि वा लिखेत् ॥**
**सहितं बलिमालिख्य गृह्ण गृह्ण ततो वदेत् ।**
**वह्नि-जायान्वितो मन्त्रः क्षेत्रपालस्य सुन्दरि ॥**

तथा–

**गां गीं गूं त्रयमालिख्य ङेऽन्तं गणपतिं ततः ।**
**वरान्ते वरदान्ते च सर्वान्ते जनमालिखेत् ॥**
**मे वशमानय प्रोक्त्वा बलिं गृह्ण द्विधा पदम् ।**
**वह्निजायान्वितो मन्त्रो गणपस्य बलिं हरेत् ॥ इति ।**

मुद्रासु सन्देहोत्पादक-कारणाभावान्नोद्धारः कृतः ।

अत्र च सर्वोपचार-सहितं धूप-दीपादि-सहितमिति मन्त्र-लिङ्गात् तत्तद्बलिषु पञ्चोपचारपूजापि कार्येति गम्यते । कलशद्रव्येण च संयोजनम् । षोडशार्णमन्त्रस्तूद्धृतो मूले–

**तारं च भुवनेशानीं सर्वविघ्नपदं ततः ।**
**कृद्भ्यः सर्व च भूतेभ्यो 'हूं'कारं वह्निवल्लभाम् ॥**
**समुच्चार्य बलिं दद्यादिति ।**

अत्र च व्यापकमण्डलबलिदान एवाधारविधानान्मण्डलचतुष्टयेषु आधारो नास्तीति गम्यते। अत्र च प्राकृतो

बालायामपि (मूल?) मूलकृता बलिदानान्ता पूजा समापिता । इहापि तदन्ता विहितेत्यतो ज्ञायते मूलकृतोऽग्रिमकृत्यमनावश्यकं गम्यते । तथापि–

**चक्रमभ्यर्च्य कलशं विधिवत् परमेश्वरि ।**

**श्रीगुरोः कृपया देवि सर्वज्ञः सर्वतत्त्ववित् ॥**

इति पटलान्ते चक्रमभ्यर्च्येति 'क्त्वा'–प्रत्ययापेक्षितोत्तरक्रियाऽऽम्नानादनावश्यके क्रियावाचके पदे समापयेदित्येवापेक्षितत्वादध्याहार्यम् । एवं च श्रीगुरोः कृपया सर्वतन्त्रज्ञः पात्रस्थद्रव्यप्रतिपत्त्यादिरूपसर्वतत्त्ववित् कलशेन चक्रमभ्यर्च्य समापयेत् । तन्त्रान्तरोक्तप्रकारादिना समापयेदिति यावत् । इत्यर्थेनोत्तरकृत्यमनुज्ञातं द्रष्टव्यम् ।

**[ जपः, समर्पणमुद्वासनं च ]**

ततः पादौ प्रक्षाल्याचम्य स्वपूर्वासन उपविश्य–

**'उपचारैः समाराध्य सहस्रं प्रजपेच्छुचिः ।**

इति 'सप्तदश-पटल'-विहित सहस्रसङ्ख्यं मौनी मन्त्रार्थं च ध्यायन् कुर्वीत । अशक्तौ तु–

**पूजागृहं ततो गत्वा चक्रराजं समर्चयेत् ।**

**विद्यां जपेत् सहस्रं वा त्रिशतं शतमेव वा ॥**

इति 'ब्रह्माण्डपुराणीय'-सहस्रनाम-प्रकरणे' विहित-त्रिशत-शत- सङ्ख्यान्यतर-सङ्ख्यं जपं कुर्यात् । जपप्रकार-मालाभेदास्तु वक्ष्यन्ते ।

एवं जपं कृत्वा सामान्यार्घजलेन–

**गुह्यातिगुह्यगोप्त्रि त्वं गृहाणास्मत्कृतं जपम् ।**

**सिद्धिर्भवतु देवेशि त्वत्प्रसादान्मयि स्थिता ॥**

इति देव्यै समर्प्य–

**विद्यां जपेत् सहस्रं वा त्रिशतं शतमेव वा ।**

**रहस्यं नाम साहस्रमिदं पश्चात् पठेन्नरः ॥**

इति विहितां सहस्रनामस्तुतिं कृत्वा 'श्रीमच्छ्रीकोशहृदय'मिति नमस्कृत्य कुमारीं बालया षोडशोपचारैः सम्पूज्य, बालया सुवासिनीं सम्पूज्योभयत्रापि श्रीविद्यां सम्पूज्य त्रिः सन्तर्प्य–

'एषा परापररहस्ययोगिनी सर्वानन्दमये महाचक्रे बैन्दवे परब्रह्मस्वरूपिणी परमामृतशक्तिः सर्वचक्रेश्वरी सर्वयन्त्रेश्वरी सर्वमन्त्रेश्वरी सर्ववीरेश्वरी सर्वपीठेश्वरी सर्वयोगेश्वरी सर्ववागीश्वरी सर्वसिद्धेश्वरी

सर्वजगदुत्पत्तिमातृका सचक्रासना समुद्रा ससिद्धिः सायुधा सवाहना सपरिवारा सर्वोपचारैर्महात्रिपुरसुन्दरी परयाऽपरया परापरया सपर्य्यया पूजिताऽस्तु' ।
इति सामान्योदकेन पूजां समर्प्य मयूखान् परमेश्वर्यां लीनान् विभाव्य खेचरीमुद्रया शक्तिचक्रस्वामिनीमात्मनि श्रीगुरोः: कृपया संयोज्येशानकोणे शेषिकाभ्यो नम इति निर्माल्यं प्रक्षिप्यार्घपात्रमुत्तोल्य दक्षहस्ते संस्थाप्य वामेन तत्त्वमुद्रया गुरुमन्त्रान्ते नाममन्त्रेण त्रीन् गुरून् त्रिः सन्तर्प्य पुनराधारकं कृत्वा आरात्रिकमध्यस्थं दीपं मूलेन भक्षयित्वा कापालिन्याचामेत् । स्वपात्रं गृहीत्वा तत्रार्घामृतं निक्षिप्य दक्षतत्त्वमुद्रया द्वितीयं परिगृह्य प्रथमकूटम्—आत्मतत्त्वाय स्वाहा । द्वितीयकूटं विद्यातत्त्वाय स्वाहा । तृतीयकूटं शिवतत्त्वाय स्वाहेति तत्त्वत्रयसंयोगेन स्वान्तेवासिनीं सन्तर्प्य पञ्चमुद्राभिः किञ्चिदुल्लास्य श्रीगुरोराज्ञया स्वयं श्रित्रिपुरेति विभाव्यार्घादि पात्रस्थान् मन्त्रानाकृष्य तत्रस्थाक्षतादिकं शेषिकाभ्यो दत्त्वा, सर्वाणि पात्राण्यधोमुखान्यग्नौ प्रताप्य प्रतिष्ठापयेत् ।

कुमारीपूजनं कुमारी-मन्त्रेणेति एकोनविंशपटले दूतीयागप्रस्तावे उक्तम् । सप्तदश-पटलेऽपि होमसमाप्तौ 'कन्यका पूजिता येने'त्युपक्रमेण बालया पूजयेदित्युक्तेस्तयैव पूजनम् । अत एव 'श्रीविद्यां तत्र पूजये'दित्युक्तत्वात् कुमारी-सुवासिनी-पूजनानन्तरं तासु श्रीविद्यापूजनमपि कार्यमिति ज्ञेयम् ।

कुमार्यस्तु मूले उक्ताः –

**एकाब्दाः षोडशाब्दान्ताः कन्यकाः पूजने शुभाः ।**
**विवाहरहिताः कन्या उत्तरोत्तर-सिद्धिदाः ॥**
**विवाहिताश्च देवेशि बाला एव कुमारिकाः ।**
**सुवासिन्यो महाप्रोढाः संशयो नास्ति सुव्रते ॥** इति ।

ततो नैवेद्यं स्वयं भुक्त्वा बलिदान-निर्माल्यादि नद्यां प्रक्षिप्य यथासुखं विहरेत् ।

इयं च पूजा पर्युषितैः पुष्पैर्न कार्या । तदुक्तं पञ्चदशे पटले–

**पुष्पैः पर्युषितैर्देवि नार्चयेत् स्वर्णजैरपि ।**
**निर्माल्यभूतैः कुसुमैरुत्सृष्टैः परमेश्वरि ॥** इति ।

एतावद् विस्ताराशक्तौ तूक्तं मूलकृता सप्तदशे पटले–

ईश्वर उवाच–

श्रृणु देवि प्रवक्ष्यामि जपहोम-विधिं प्रिये ।
चक्रं समर्चयेद् देवि सकलं नियतव्रतः ॥
बाह्य-मध्यगतं वापि मध्यं वा चक्रमर्चयेत् ।
उपचारैः समाराध्य सहस्रं प्रजपेच्छुचिः ॥
तदग्रसंस्थितो मन्त्री तत्रोत्तरफलं लभेत् ॥ इति ।

बाह्यमध्यगतादिभेदस्तु प्रागुपपादितः । अतिदरिद्रस्योपचारासम्भवे तु तत्रैवोक्तम्–

ध्यात्वाऽथवा चक्रराजं मनःपूजा-समन्वितः ।
जपारम्भं सुधीः कुर्यान्महापातकहा भवेत् ॥

मनसोऽपि नैश्चल्याभावेऽशक्तौ तु–

मामर्चयतु वा मा वा विद्यां जपतु वा न वा ।
कीर्त्तयेन्नाम-साहस्रमिदं मत्प्रीतये सदा ॥

इति विहित-केवलसहस्रनामपाठं कुर्यादिति संक्षेपः ।

॥ इति श्रीमत्परमहंस-परिव्राजकाचार्य-
श्रीरामानन्दनाथशिष्य-शङ्करानन्दनाथ-कृते 'सुन्दरी-महोदये'
नित्यपूजाविधिश्चतुर्थोल्लासः ॥



## ॥ अथ 'काम्य-पूजा-होम-पुरश्चरणादि नाम' पञ्चमोल्लासः ॥
### (माला-जप-दमनपूजा-पवित्रारोपणादिनैमित्तिक-विधानानि)

**अथ मालाः –**

तत्राकारादि-क्षकारान्ता मातृका-वर्णमयी माला मन्त्रसिद्धिदा । तत्रानुपूर्व्येणाकारादिक्षकारान्तान् पञ्चाशद् वर्णानुच्चार्य तथैव विलोमेन तावतो वर्णानुच्चार्य अ क च ट त प य शाद्यष्टौ वर्गानुच्चार्य क्षकारं मेरुस्थाने उच्चरेदित्यष्टोत्तरशतसंख्या वर्णमाला ।

रुद्राक्षमाला मोक्षदा । मुक्ताफल-माणिक्यमाला च साम्राज्यदायिनी । स्फाटिकी-माला सर्वराज्यवशङ्करी । पुत्रजीवकमाला लक्ष्मी-विद्यादायिनी । पद्माक्षमाला लक्ष्मी-यशोदायिनी । रक्तचन्दनमाला वश्य-भोगदायिनी ।

तत्राक्षमालातिरिक्त-मालासु मालासंस्कारविधिना संस्कृतासु जपं कुर्यात् । तत्संस्कारविधिर्यथा–

अष्टोत्तरशत-सङ्ख्याकान् रुद्राक्षान् गृहीत्वा शुद्धपट्टसूत्रं षड्गुणितं कृत्वा, एकैकं मातृकावर्णं सप्रणवमुच्चरन्नावृत्त्या मालां ग्रथित्वा नवाश्वत्थपत्रैः पद्माकारं विरच्य, तत्र मालां संस्थाप्य मूलान्ते पञ्चगव्येन शुद्धजलेन 'ॐ सद्योजात'मित्यादि 'भवोद्भवाय नमः' इत्यन्तेन मन्त्रेण प्रक्षाल्य, चन्दनागरु-गन्धाद्यैः 'ॐ वामदेवाये'त्यादि 'मनोन्मनाय नमः' इत्यन्तेन मन्त्रेण घर्षणं कृत्वा, 'अघोरेभ्यः' इत्यादि 'रुद्ररूपेभ्यः' इत्यन्तेन मन्त्रेण धूपयित्वा 'ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्' इति लेपयित्वा सम्पूर्णां मालां गृहीत्वा 'ॐ ईशान' इत्यादि 'सदाशिवोम्' इति मन्त्रेणाष्टोत्तरशतं मन्त्रयित्वा प्राणप्रतिष्ठां कृत्वा, उपास्यदेवतां तत्रावाह्य–

**ॐ माले माले महामाले सर्वसिद्धिस्वरूपिणि ।**
**चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥**

इति मायाबीजादिकेन सम्पूज्य स्वेष्टमन्त्रेण मातृकावर्णैश्चाभिमन्त्र्य पूर्वोक्तमालामन्त्रेणाष्टोत्तरशताहुतीर्दत्त्वा सम्पाताज्यं मालायां निक्षिपेत् । अशक्तौ तु द्विगुणमभिमन्त्रणम् ।

त्वं माले सर्वदेवानां सर्वसिद्धिप्रदा मता ।
तेन सत्येन मे सिद्धिं देहि मातर्नमोऽस्तु ते ॥

इति नमस्कृत्य रक्तवस्त्रे निक्षिप्य जपेत् । इयं च माला यन्मन्त्रजपार्थं संस्कृता तमेवानया जपेन्नान्यम् । जपस्त्वङ्गुष्ठमध्यमायोगेन कार्यः । सूत्रे च जीर्णे सूत्रान्तरेण ग्रन्थित्वा मूलेनाष्टोत्तरशतमभिमन्त्रयेत् । जपसमये प्रमादाद् हस्तात् पाते छिन्ने वा निषिद्धस्पर्शे वा अष्टोत्तरशतं जपः प्रायश्चित्तम् ।

॥ इति माला-संस्कारः ॥

[जप-प्रकारादयः]

जप-प्रकारस्तु त्रेधा—निगदोपांशुमानसभेदात् । तत्र स्पष्टवाचा निगद्यमानो मन्त्रो निगदः । अव्यक्तस्फुरद्वक्त्र उपांशुः । चिन्तन-रूपेणोच्चारणं मानसो जपः । अत्रोत्तरोत्तरस्य पूर्वापेक्षयाऽतिप्राशस्त्यम् ।

अथ नैमित्तिकम्—

तत्र ब्रह्महत्यादि-दोषनिरसनार्थं प्रायश्चित्तरूपपूजनम् । तत्र पूर्वोक्त-सकलपूजा-क्रमेण सकलं चक्रं यदि पलाशपुष्पैरनवरतं मासपर्यन्तं पूज्यते, तदा जन्मान्तरकृत-महापातककोटीनां नाशः स्थिरलक्ष्मीश्च । तथैव यदि जपापुष्पैः पूज्यते तदा ब्रह्महत्यादिपापानां नाशः, धनलाभश्च । केतकीपत्रैर्यदि तदोपपातकनाशोऽतुलसौभाग्यप्राप्तिः । शतपत्रैस्तथैव यदि तदा सकलपातकनाशः । चम्पकपुष्पैस्तथैव यदि तदा शतजन्मोद्भव-पातकनाशः सौभाग्यलाभश्च । श्वेतपत्रैर्यदि तथैव पूजनं तदा विंशतिजन्मकृतपापनाशो मोक्षलाभश्च । बन्धूककुसुमैर्यदि तथैव पूज्यते, तदा त्रैलोक्यमध्यकष्टजनकपापनाशः । बिल्वपत्र-जलजैर्यदि मासमात्रं पूज्यते, तदा सर्वपापहरो भूत्वा समृद्धिमान् भवेत् । मल्लिका-मालती-जाती-कुन्द-शतपत्रज-श्वेतोत्पलैर्मासमात्रं पूजया पातकनाशः । चम्पक-पाटल-बकुल-नागकेसर-कह्लार-सिन्धुवारैर्मासपूजया जन्मसहस्रजं पापं नश्येत् ।

अत्र यद्यपि मूले मासनियमो नोक्तस्तथापि तत्तत्पुष्पोत्पत्ति-समय-मासस्य तत्तत्पूजायामर्थादेव प्राप्तेर्न दोषः । मल्लिका-मालत्यादीनां समुदितानामगस्त्यादीनामपि समुदितानां साधनत्वम् ।

अथ दमनपूजा—चैत्र शुक्लचतुर्दश्यां नित्यार्चानन्तरं दमन-समीपे गत्वा—

**कामनेत्रसमुद्भूत-रतिनेत्रजलाप्लुत ।**
**ऋषिगन्धर्वसिद्धानां विमोहक नमोऽस्तु ते ॥**
**शिवप्रसादसम्भूत अत्र सन्निहितो भव ।**
**शिवकार्यं समुद्दिश्य नेतव्योऽसि शिवाज्ञया ॥**

इत्यभिसम्मन्त्र्य तत्र रतिप्रीतिसहितं कामं सम्पूज्य पल्लवयुतं समूलं दमनं स्वयमुत्पाद्य नूतने वंशपात्रान्तः सकर्णिकाष्टदले नवधा विभज्य संस्थाप्य 'ह्सक्षमलवरयऊ'मिति नवधा विभक्तानन्दभैरवबीजेन नवधा विभक्तं दमनं सम्पूज्य दक्षिणसिंहासन-प्रकरणोक्तया—

अघोरे ऐं थघोरे ह्रीं घोरघोरतरे श्रीं सर्वतः सर्वरूपेभ्यो ह्स्क्लीं ह्सौः' इत्यघोरविद्ययाऽद्भिरभिषिच्यास्त्रेण संरक्ष्य कवचेनावगुण्ठ्य त्रिशूल-मुद्रामुपरि परिभ्राम्य पूर्वोक्तनवार्णमेरुरूपोर्ध्वाम्नायविद्ययाऽस्त्रमन्त्रेण च क्रमेण श्रीखण्ड-कुङ्कुम-कर्पूरैस्तं लेपयेत् । इत्यधिवासनं कृत्वा रात्रौ जागरणं कुर्यात् । ततश्चतुर्दश्यां प्रातरुत्थाय नित्यार्चनानन्तरं सिन्दूरेण दीक्षाभिषेकोक्तनवकोणचक्रं विलिख्य तत्रैकैकचक्रे हेमरत्नपूरितमेकैकं कलशं संस्थाप्य तद्दक्षतः कुङ्कुमाद्यैर्विचित्रिते महन्मण्डले त्रिकोणं कृत्वा तत्राशोकतरुमालिख्य तन्मध्ये वसन्तसहितं काममरुणं तरुणं पञ्चबाण-धनुर्द्धरं वाम-दक्षिणयोः रति-प्रीति-विशोभाढ्यं ध्यात्वा 'ऐं ह्रीं श्रीं क्लीं कामाय नमः' इति मन्त्रेण कामं षोडशोपचारैः सम्पूज्य वामदक्षिणयोः स्वर्णमणिविभूषिते पद्मताम्बूलहस्ते रक्तवस्त्रविराजिते गौर-श्यामवर्णे रति-प्रीती उभे स्त्रियौ ध्यात्वा 'ऐं ह्रीं श्रीं क्रें रत्यै नमः, ऐं ह्रीं श्रीं क्रें प्रीत्यै नमः' इति सम्पूज्य, ततः कदम्बवनमध्यगम्—

**गौरवर्णं वामहस्ते सुधापूर्णघटान्वितम् ।**
**दक्षहस्तेन दधतं नानापुष्प-समुच्चयम् ॥**

इति ध्यात्वा 'वसन्ताय नमः' इति वसन्तं सम्पूज्य पुनर्धूप-दीपादि दत्त्वा 'कामराजाय विद्महे पुष्पबाणाय धीमहि तन्नोऽनङ्गः प्रचोदयात्' इति गायत्रीं जप्त्वा—

**नमोऽस्तु पुष्पबाणाय जगदानन्दकारिणे ।**
**मन्मथाय जगन्नेत्र रति-प्रीतिप्रियाय च ॥**

इति नमस्कृत्य पश्चाद् दमनपाणियुक्–

**आमन्त्रिताऽसि देवेशि सद्यस्काले मया शिवे ।**
**कर्त्तव्यं तु यथालाभं पूर्णं पर्व तवाज्ञया ॥**
**षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे ।**
**हृत्स्थान् पूरय मे कामान् देवि कामेश्वरि ( श्रिये ) ॥**

इति सुन्दरीं सम्प्रार्थ्य नित्यार्चनक्रमेण सपरिवारां तां तेन सम्पूज्य–

**समस्तचक्र-चक्रेशि सर्वविद्याशरीरिणि ।**
**वेदमातर्ममैतत्तु भवत्विष्टं तवाज्ञया ॥**

इति सम्प्रार्थ्य कुमारी-सुवासिनी-योगिनीगण-ब्राह्मणान् सम्पूज्य गुरुं च सम्पूज्य पूर्वोक्तहोमप्रकारेण हुत्वा गुरुं संन्तोष्य पूर्णाहुतिं हुत्वा ब्राह्मणैः सह भुञ्जीतेति । अशक्तौ तु मूल्येन गृहीतमन्येन वाऽऽनीतं सङ्गृह्य पूर्ववत् पूजयेत् । पूर्वदिनाधिवासनाभावे सद्योऽधिवासनम् । नवकलशाभावे एको वा कलशः । तदुक्तं 'संहितायाम्' । 'कामनेत्रसमुद्भूत'-मित्यादिना–

**इत्यामन्त्र्य रतिं कामं तत्र सम्पूजयेत् सुधीः ।**
**स्वयमुत्पाद्य दमनं समूलं पल्लवैर्युतम् ॥**
**आनीतमथवाऽन्येन मौल्यादानीतमीश्वरि ॥ इति ।**

तथा प्रार्थनामन्त्रा अपि तत्रैवोक्ताः । यद्यपि ते तत्र पूर्वदिनाधिवासने उक्तास्तथापि मूलेऽधिवासने तदनुक्तेर्योग्यत्वात् पूजायामेव लिखिताः । अनङ्गगायत्र्यपि तत्रैवोक्ता । एतावन्मात्रं च मूलानुक्तमपि आवश्यकमिति गृहीतम् ।

**अथ पवित्रारोपणम्–**

मिथुनार्कमारभ्य तुलासङ्क्रान्तिमासपर्यन्तं चतुर्थ्यामष्टम्यां नवम्यां पौर्णमास्यमावास्ययोः पवित्रारोपणं शक्तौ सत्यां कुर्वीत । अशक्तौ तु श्रावण्यां चतुर्दश्यां सुवर्ण-रौप्य-कार्पास-पट्ट-त्रसरी-पद्म-कल्कल-शाण-दर्भ-मुञ्जानां मध्ये यस्य कस्यापि सूत्रैर्नवभिः प्रत्येकं कल्पितैरष्टोत्तरशत-सूत्रैरुत्तमं तदर्द्धं मध्यमं पवित्रं कल्पयेत् । यथा नवतन्तुषु प्रत्येकम्–

'ॐकाराय० । चन्द्रमसे० । वह्नये० । ब्रह्मणे० । नागेभ्यः० । गुहाय० । रवये० । सदाशिवाय० । सर्वदेवेभ्यो नमः' इति क्रमेण देवान् सम्पूज्यैवमेव प्रतिप्रधानं मन्त्रावृत्ति-न्यायेनाष्टोत्तरशतसूत्रतन्तुषु सम्पूज्य स्वाहेत्यभि-मन्त्र्य, नमो मन्त्रेण प्रक्षाल्यास्त्राय फडिति प्रोक्ष्य, वौषडिति अवगुण्ठ्य,

हुमिति कुमारीः सुवासिनी-योगिनी-योगिनश्च सम्पूज्य तच्छ्रीपवित्रं स्वकरे धृत्वा संबद्ध्य ब्राह्मणैः सह कृतभोजनः सुखी विहरेत् । ततस्तत् पवित्राणि नद्यादौ विसृजेदिति ।

**'पक्षद्वयेऽपि पूजा स्याच्चतुर्थ्यामष्टमीदिने' ।**

इति मूले पक्षद्वये पक्षान्तद्वये इत्यर्थः । यद्यपि ग्रन्थिदानतः शक्तिपूजनं मूले नोक्तं तथापि–

**'प्रक्षालयेत्ततोऽभ्युक्ष्यमस्त्रमन्त्रेण देशिकः' ।**

इति मूलस्थ-देशिकपदसूचित-तन्त्रान्तरोक्तार्थग्रहणस्य संगृहीतत्वात् संहितोक्तं द्रष्टव्यम् । अन्यदनावश्यकत्वान्न तत्रत्यं गृहीतमिति दिक् ।

**॥ इति नैमित्तिक-विधिः ॥**

**अथ रत्नपुष्प-पूजाविधिः** काम्य उच्यते–

तत्र कर्पूर-क्षोद-चन्दनयुतैर्नानासुगन्धिपुष्पैरेकविंशतिरात्रेण पूजया राजवशीकारो महारोगनाशश्च । मुक्तारत्नघटित-स्वर्णपुष्पैः पूजया सप्ताहाद् वैरिवश्यता । मरकतघटितस्वर्णपुष्पैर्नानापुष्पसमुच्चितैरेक-विंशतिरात्रपूजया विबुधवश्यता, वैरिवश्यता च । पुष्परागघटित-स्वर्णपुष्पैरेकविंशतिरात्रपूजया वागीशता । वज्रकेयूरघटितस्वर्णपुष्पैरेक-विंशतिरात्रपूजया जगतीवश्यता । इन्द्रनीलमयैः स्वर्णपुष्पैर्नीलकमल-युतैरेकविंशतिरात्रपूजया वैरिनाशो वैरिवश्यता च । गोमेदघटितैः स्वर्णपुष्पैः कुङ्कुम-किंशुकयुतैः सप्ताहं पूजया वैरिवश्यता । एकविंशति-रात्रपूजया महत्पापनाशः । चम्पकसहितैः वैडूर्यघटितैः स्वर्णपुष्पैरेक-विंशतिरात्रपूजया सर्ववश्यता। केवलं स्वर्णपुष्पैर्मासमात्रपूजया सर्वस्तम्भः। सर्वपापनाशः । अत्र च–

**स्वर्ण-रत्नमयैः पुष्पैर्नवैरेव प्रपूजयेत् ।**
**पुष्पैः पर्युषितैर्देवि नार्चयेत् स्वर्णजैरपि ॥**

इति निषेधात् तत्कालोत्पादितैरेव पूजा कार्या । यदा तु न तथा स्वर्ण-रत्नादिपूर्णत्वं लभ्यते, तदा यस्मिन् काले सुखलब्धपुष्पैरेवालङ्कार-रूपैश्चक्रनायिकां पूजयेत् ।

**॥ इति रत्नपूजा-विधिः ॥**

[मन्त्रपुरश्चरणविधिः]

अतः परं काम्य-प्रयोगाणां मन्त्रपुरश्चरणाधीनत्वान्मन्त्रपुरश्चरणमुच्यते । तत्र श्रीगुरुं सन्तोष्य चन्द्र-तारा-बलानुकूले दिवसे शून्य-मास-शुक्र-गुर्वस्तादीन् वर्जयित्वा पश्चिमाभिमुख-लिङ्गालये स्वयम्भू-बाण-लिङ्गालये मुक्ति-क्षेत्रेषु गङ्गायां पर्वताग्रे पवित्रे सुस्थले देशे एकान्तभूमेः परिग्रहं कृत्वा पुरश्चरणदिनात् प्राक् तृतीयदिने क्षौर-गोमयमृत्तिकास्नानादि कृत्वा वेदिकायाश्चतुर्दिक्षु आहार-विहारार्थं चतुरस्रं क्षेत्रं कृत्वा तत्र मण्डपं विधाय तस्मिन् दिने एकभक्तं कुर्यात् । तद्द्वितीयदिनकृत्यं विधाय शुद्धः सन् चतुरस्रे मण्डपे चतुर्दिक्षु अश्वत्थौदुम्बर-प्लक्षाणामन्यतमस्य वितस्तिमात्रान् दशकीलकान् 'ॐ अस्त्राय फट्' इति मन्त्रेणाष्टोत्तर-शताभिमन्त्रितान् दशदिक्षु–

ॐ ये चात्र विघ्नकर्त्तारो दिवि भुव्यन्तरिक्षगाः ।
विघ्नभूताश्च ये चात्र मम मन्त्रस्य सिद्धिषु ॥
मयैतत् कीलितं क्षेत्रं परित्यज्य विदूरतः ।
अपसर्पन्त ते सर्वे निर्विघ्नं सिद्धिरस्तु मे ॥

इति निखन्य कीलान् संस्थाप्य तेषु 'ॐ सुदर्शनास्त्राय फट्' इत्यस्त्रं सम्पूज्य सर्वादिक्रमेणेन्द्रादीन् लोकपालान् "ॐ भूर्भुवः स्वरिन्द्रलोक-पालेहागच्छे"त्यादि-प्रकारेणावाह्य पाद्यादिभिः सम्पूज्य मध्यस्थाने वास्त्वीशं क्षेत्रपालं सम्पूज्य 'सर्वविघ्ननाशाय गणपतिं' पूजयेत् ।

'ओमद्येत्यादि-मत्कर्तव्यामुकदेवताक-मन्त्रपुरश्चरणकर्मणि विघ्ननाशार्थं गणपतिं पूजयिष्ये' इति सङ्कल्प्य पञ्चोपचारैः सम्पूज्य माषभक्तादिना पूजितदेवताभ्यो बलिं दत्त्वा–

ॐ रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ।
मातरोऽप्युग्ररूपाश्च गणाधिपतयश्च ये ॥
विघ्नभूताश्च ये चान्ये दिग्विदिक्षु समाश्रिताः ।
सर्वे ते प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ॥

इष्टदिक्षु बलिं दत्त्वा–

ॐ अद्येत्यमुकगोत्रोऽमुकशर्मा ज्ञाताज्ञातजनितपापक्षयकामोऽष्टोत्तर-सहस्रगायत्रीजपमहं करिष्य इति सङ्कल्प्य गायत्रीं जप्त्वा उपवासं हविष्यान्नं वा कुर्यात् । ततः परदिने नित्यं कृत्वा स्वस्तिवाचनपूर्वकं सङ्कल्पं कुर्यात् ।

ॐ विष्णुः विष्णुः ॐ तत्सदद्येत्यादि-नामगोत्रोल्लेखं कृत्वाऽमुकदेवताया अमुकमन्त्रसिद्धिप्रतिबन्धकशेषदुरितक्षयपूर्वकतन्मन्त्रसिद्धिकामोऽद्यारभ्य यावता कालेन पुरश्चरणं सेत्स्यति, तावत्कालममुकमन्त्रस्य यत्सङ्ख्यजप-तद्दशांशहोम-तद्दशांश-तर्पण-तद्दशांश-ब्राह्मणभोजन-रूप-पुरश्चरणमहं करिष्ये' इति सङ्कल्प्य, यथोक्तासन उपविश्य, भूतशुद्धि-प्राणप्रतिष्ठा-न्यासजालान्तं विधाय गुरुदेवतात्मनामैक्यं भावयन् विद्यां प्रातरारभ्य मध्याह्न-पर्यन्तं पूर्वोक्तजपप्रकारेण पूर्वोक्तैकतरमालया जपेत् । तं जपं देवीवामकरे 'गुह्यादिगुह्ये'त्यनेन समर्प्य पूजां नित्यप्रकारेण कुर्यात् । एवं त्रिलक्ष-नवलक्षसङ्ख्यपुरश्चरणसमाप्तिपर्यन्तं कृत्वा शक्तौ सत्यां नित्यं नित्यजपदशांशहोमादि कुर्यात् ।

अशक्तौ त्वन्ते — यत्सङ्ख्य आद्यदिने जपो जातस्तत्सङ्ख्य एवोत्तरदिनेषु कार्यो न तु न्यूनाधिकः । पुरश्चरणसमाप्ति-पर्यन्तञ्चैते नियमाः । हविष्यान्नभुग् नित्यं प्रक्षालित-कुशशय्यायां भूमौ स्वाप-तिलामलकद्रव्येण त्रिसन्ध्यस्नान-जपमध्यमौनादयः ।

निषिद्धानि च—मिथ्याभाषण-कांस्यपात्रभोजन-हविष्य-भोजन-मध्ये क्षौर-परान्न-स्व-परस्त्रीरूपाणि ।

जपमध्ये सकृच्छब्दान्तरोच्चारणे प्रणवोच्चारणम् । अप-शब्दप्रयोगे प्राणायामः । बहुप्रलापे क्षुतेऽस्पृश्यस्पर्शे जृम्भायां विण्मूत्रोत्सर्गार्थमुत्थाने षडङ्गन्यासः प्रायश्चित्तम् ।

अथ ग्रहणकालीनपुरश्चरणसङ्कल्पः —

'ॐ अद्येत्याद्यमुकगोत्रोऽमुकशर्मा राहुग्रस्ते दिवाकरे निशाकरे वाऽमुकदेवताया अमुकसिद्धिकामो ग्रासाद् विमुक्तिपर्यन्तं जपरूपपुरश्चरणमहं करिष्ये' इति सङ्कल्प्य जपं कृत्वा तद्दिने तत्परदिने वा स्नानादिकं विधाय—'ॐ अद्येत्याद्यमुकमन्त्रस्य कृतैतद्ग्रहणकालीन-यत्सङ्ख्यजप-तद्दशांशहोम-तद्दशांशतर्पण-तद्दशांशाभिषेक-तद्दशांशब्राह्मणभोजनकर्मण्यहं करिष्ये' इति सङ्कल्प्य, होमादिकं कुर्यात् । तत्र मूले—

**नवलक्ष-प्रमाणानि जपेत् त्रिपुरसुन्दरीम् ।**
**रुद्रमूर्त्तिः स्वयंकर्त्ता हर्त्ता साक्षान्न संशयः ॥**

इति वचने नवलक्ष-प्रमाणकथनात् तत्संख्यमेव पुरश्चरणम् । तत्रापि—'कलौ चतुर्गुण'मित्यादि-वाक्यान्तरैकवाक्यतालाभाय नवलक्षप्रमाणानीति

बहुवचनं चतुःसङ्ख्याभिप्रायम् । तेन षट्त्रिंशल्लक्षं पुरश्चरणमिति फलितोऽर्थः ।

एवं च प्रतिलक्षं फलसङ्कीर्त्तनानि–

'लक्षमात्रं जपेद् यस्तु महापापैः प्रमुच्यते ।'

इत्यादीनि मूले कृतानि तानि–'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति' इतिवदवयवस्तुतिद्वाराऽवयविनवलक्षस्तुत्यर्थान्येवेति ज्ञेयम् । एवं जपं कृत्वा तद्दशांशेन कुण्डे स्थण्डिले वा वक्ष्यमाणप्रकारेण जुहुयात् । स च प्रकारो यथा–

[होमप्रकारः]

तत्र पूर्वोक्त-जपहोमादीनां होमस्य च दीपस्थानं विना करणेऽनर्थ-श्रवणात् कूर्मचक्राख्यं दीपस्थानमुच्यते । कूर्माकृतिर्वर्त्तुलं कृत्वाऽष्टासु दिक्ष्वष्टकोष्ठान् विरचय्य मध्ये चैकं कोष्ठमिति नवकोष्ठानि कृत्वा मध्ये सामान्यतः क्षेत्रनाम लिखित्वा पूर्वादिक्रमेण प्रतिदिशं स्वरयुग्मसहितमेकैकं कादिवर्गमिति क्रमेण कचटतपयशेति सप्तवर्गान् कुबेरान्तं विलिख्य ऐशान्ये लक्षवर्णौ विलिखेदिति । एवं कूर्मचक्रं निर्माय यस्मिन् कोष्ठे क्षेत्रनाम तन्मुखमिति ज्ञात्वा तत्कोणदिशि जपहोमाद्यारम्भं कुर्वीत ।

मुख-पार्श्वद्वयकोष्ठयोः पाण्योस्तत्पार्श्वद्वयकोष्ठयोः कुक्ष्योस्तत्पार्श्व-द्वयकोष्ठयोः पादयोः पुच्छे चारम्भेऽनर्थः । गृहे आरम्भे तु गृहपतिनामाक्षरं यस्मिन् कोष्ठे तत्रारम्भः । एवं विचार्य कुण्डादि कुर्यात् । प्राची-साधनं चेत्थम्–

मेघाद्यनावृते सूर्ये निर्मल-नभोमण्डले दिवसे वृक्षप्रासादाद्यनावृते भूप्रदेशे जलयन्त्रादिना दर्पणोदरवत् सुसमीकृते भूतले क्वचिद् बिन्दुं कृत्वा तदवष्टम्भवतः प्रतिदिशं द्वादशाङ्गुलमानेन वृत्तं निष्पाद्य तत्र षडङ्गुलमान-परिणाह-मूलमुत्तरोत्तर-परिणाहा-पचयेन सूचीमात्राग्र-परिणाहं ऋज्वाकृतिं शङ्कुं द्वादशाङ्गुलोच्छ्राय-सहित-वृत्ताकारं शिल्पिवरेण निर्मितं वृत्त-मध्यस्थबिन्दुमध्ये यथाशङ्कु मूलपरिणाहमध्यं भवति तथा संस्थाप्य तच्छङ्कुच्छायाग्रस्य पूर्वाह्णेन वृत्तरेखा-पश्चिमभागे यत्र सम्पातस्तत्र चिह्नं विधाय तच्चिह्नद्वयप्रापि यत्सूत्रं तत्पूर्वापरं परिकल्प्य तच्चिह्नद्वयावष्टम्भेन किञ्चिदन्योन्यसंश्लिष्टं पूर्वापरं वृत्तद्वयं विधाय तद्वृत्तरेखादक्षिणोत्तर-सूत्रद्वयसम्पाताद् वक्ष्यमाणमानेन तुल्यरूप-परिकल्पितसूत्राग्रैस्तेषां कुण्ड-मण्डपादीनां प्राक्-प्रत्यक्-दक्षिणोत्तरात्मकं दिक्-चतुष्टयं कल्पयेदिति ।

अत्र कुण्डनिर्माणं यद्यपि मूले चतुरस्र-त्रिकोण-योनि-भग-वर्त्तुलार्द्ध-चन्द्र-नवत्रिकोण-पद्मकुण्डानि तत्तत्फलार्थान्यष्टावुक्तानि, तथापि-'एतानि सर्वकार्याणि चतुरस्रे भवन्ति हि' इति मूलकृता समस्तफलसाधनत्वेन चतुरस्रोक्तेः ।

**एतस्मिन् माति यद् धान्यं तदन्येषु यथा भवेत् ।**
**तेन मानेन सर्वाणि कुण्डानि रचयेद् बुधः ॥**

इति संहितायामुत्तरकुण्डप्रकृतित्वस्याप्युक्तत्वाच्चतुरस्रमेव कुण्डं लिख्यते । तत्र हस्तमात्रमितायां भूमौ सुसमानायाम्–

**पूर्वापरायतं सूत्रं विन्यसेदुक्तमानतः ।**
**तन्मध्ये किञ्चिदालम्ब्य मत्स्यौ द्वौ परितो लिखेत् ॥**
**तयोर्मध्यस्थितं सूत्रं विन्यसेद् दक्षिणोत्तरम् ।**
**द्वाभ्यां द्वाभ्यां तथाग्राभ्यां कोणेषु मकरान् लिखेत् ॥**
**मत्स्यमध्यस्थिताग्राणि तत्र सूत्राणि पातयेत् ।**
**चतुरस्रं भवेत् तत्र चतुष्कोष्ठसमन्वितम् ॥**

इति 'शारदोक्त'प्रकारेण ।

चतुः कोष्ठानि सम्मार्ज्य चतुरस्रं कुण्डम्, तत्रान्तः पञ्चदशाङ्गुलं खातं कृत्वा कण्ठदेशे एकमङ्गुलं त्यक्त्वा षडङ्गुलविस्तृतां नवाङ्गुल-समुन्नतां प्रथमां मेखलां कृत्वा सप्ताङ्गुलोच्चां चतुरङ्गुलविस्तृतां द्वितीयमेखलां पञ्चाङ्गुलोच्चां द्व्यङ्गुलविस्तृतां तृतीयमेखलां च कृत्वा कुण्डपश्चिमभागे द्वादशाङ्गुले दीर्घामष्टाङ्गुलविस्तृतामश्वत्थपर्णरूपां त्रिकोणरूपां वा योनिं कुर्यात् । एकमेखलापक्षे तु अष्टादशाङ्गुलं खातं कृत्वा चतुरङ्गुलविस्तृतां षडङ्गुलोच्चामेकां मेखलां कृत्वा योनिं प्राग्वत् कुर्यात् । ततः प्राङ्मुख आसन उपविष्टो देशकालौ स्मृत्वा 'कृतस्य पुरश्चरणस्याङ्गभूतं दशांशेन होमं करिष्ये' इति सङ्कल्पं कुर्यात् ।

अत्र च मूले हस्तलक्षणं नोक्तं तथापि–

**चतुर्विंशतिसङ्ख्याभिरङ्गुलीभिः सुविस्तृतम् ।**
**खातं च रचयेत् कुण्डं सर्वत्र सुमनोहरम् ॥**

इति संहितायां चतुर्विंशत्यङ्गुलसङ्ख्याभिधानात्–

**"चतुर्विंशत्यङ्गुलाढ्यं हस्तं हस्तविदो विदुः ।"**

इति हस्तलक्षणं द्रष्टव्यम् । अङ्गुलप्रमाणं च हस्तस्य मध्यमाङ्गुलिपर्वणः । 'मध्यस्य दैर्घ्यमानेन मात्राङ्गुलमुदीरितम्' इति शारदोक्तं ग्राह्यम् । ततो

गोमयोदकलिप्तं कृत्वां लेखन्या पूर्वादि-पश्चिमान्तास्तिस्रो दक्षिणाद्युत्तरान्तास्तिस्रो लेखा विलिख्य लेखनीं बहिस्त्यक्त्वा प्रणवेन सामान्यार्घोदकेनाभ्युक्ष्य सिन्दूरेणाथवा कर्पूररजसाऽथवा हरिद्राचूर्णेनाथवा धान्यपिष्टेनं त्रिकोण-षट्कोणाष्टदल-चतुरस्र-चतुर्द्वारं मण्डलमालिख्य बालया मध्ये पुष्पं दद्यात् । अत्र प्रणवकरणकमभ्युक्षणं मूलानुक्तमपि–

'प्रणवेनाभ्युक्ष्य मध्ये कल्पयेद् योगविष्टरम्' ।

इति संहितोक्तं द्रष्टव्यम् । इतोऽनन्तरं मूले पात्रादिपवित्रीकरण-परिस्तरण-स्रुक्-स्रुव-संस्कारा आम्नातास्तथापि तन्त्रान्तरानुरोधेन तेऽग्नि-स्थापनानन्तरं ज्ञेयाः । ततो मूलान्ते 'कुण्डाय नमः' इति कुण्डं सम्पूज्य तस्मिन् कुण्डे–ऋतुस्नातां ग्राम्यधर्माभिरतां कामेश्वरसहितां कामेश्वरीं ध्यात्वा मूलविद्यया सम्पूजयेत् । अत्र मूले–

'कामेश्वरीकुण्डमध्ये सकामःम् ऋतुसंयुताम्' ।

इत्यत्र 'सकामाम्' इति पदे कामेन कामेश्वरेण सहितामित्यर्थेन ग्राम्यधर्मनिरतत्वं व्यज्यते–

मध्ये ऋतुमतीं विश्वमातरं वेदमातृकाम् ।
पुरुषाराधितां ध्यात्वा तद्योनौ सम्पुटस्थितम् ॥

इति संहितैकवाक्यतालाभात् । ततः सामान्यार्घं विधाय श्रोत्रियागारादिभ्य आनीतं सम्पुटमध्ये स्थापितमग्निं मूलविद्यया नेत्रमन्त्रेण विलोक्यास्त्र-मन्त्रेण संरक्ष्य प्रादक्षिण्यक्रमेण कुण्डोपरि त्रिः परिभ्राम्य पुनः सम्पुटीकृत्य 'हुं फट्' इति नैर्ऋत्यकोणे क्रव्यादांशबुद्ध्या अग्नेरंशं त्यक्त्वा कुण्डमध्ये कवचेन सम्मार्ज्य जानुभ्यामवनिं गत्वा कुण्डमध्ये सम्पुटस्थमग्निं प्रतिष्ठाप्य नाभिमण्डलस्थं ज्ञानाग्निं वहन्नासापुटक्रमेण बहिरागतं बाह्यवह्निना संयोजितमेकीकृत्य 'आं सोहं वह्निचैतन्याय नमः' इति मन्त्रेण कामेश्वरीगर्भे विचिन्त्य 'सहस्रार्चिषे हृदयाय नमः । स्वस्तिपूर्णाय शिरसे स्वाहा । उत्तिष्ठपुरुषाय शिखायै वषट् । धूमव्यापिने कवचाय हुं । सप्तजिह्वाय नेत्रत्रयाय वौषट् । धनुर्द्धरायास्त्राय फट्' इति वह्नेर्देहे षडङ्गानि योजयित्वा–

ध्यायेद् वह्निं हेमवर्णं शक्ति-स्वस्तिकधारिणम् ।
वरदाभय-शोभाढ्यं सुवर्णवर-भूषणम् ॥

इति वह्निं ध्यात्वा–

'ॐ वैश्वानर जातवेद इह लोहिताक्ष सर्वकर्माणि साधय स्वाहा' इति षोडशोपचारैः सम्पूज्य वह्नेर्मुखे षट्कोणं विचिन्त्य सप्तजिह्वाः पूजयेत् ।

प्यूं हिरण्यायै नमः (ईशकोणे) । प्रूं कनकायै० (पूर्वकोणे) । ल्यूरुं रक्तायै० (वह्निकोणे) । व्यूरूं कृष्णायै० (नैर्ऋत्ये) । श्र्यूं श्वेतायै० (पश्चिमे) । ष्यूरूं धूमिन्यै० (वायौ) । स्रूं कराल्यै० (मध्ये) इति सम्पूजयेत् ।

एवं कामेश्वरीगर्भकोशान्निःसृतमग्निं भावयेत् । मन्त्रास्तूद्धृता मूले—

**कुण्डमध्ये प्रतिष्ठाप्य कामबीजं च वह्निं च ।**
**मूर्त्तये नम आलिख्य मनुना योजयेच्छुचिम् ॥**

तथा —

**मूलविद्यां सुच्चार्य आं सोहमिति चोच्चरेत् ।**
**वह्निचैतन्यमुच्चार्य ङेन्तं हृन्मन्त्रसंयुतम् ॥**

तथा —

**तारं वैश्वानरप्रान्ते जातवेद इहावह ।**
**लोहिताक्ष ततः सर्वकर्माणीति च साधय ॥**
**वह्निजायान्वितो मन्त्र......... ॥ इति ।**

तथा —

**वह्निं वायुं वामकर्णभूषितं नादबिन्दुवत् ।**
**अनेन योजयेद् देवि क्रमेण रसनाः प्रिये ॥**
**यकारादि-सकारान्ता जिह्वाः सप्त भवन्ति हि ॥ इति ॥**

ततः पात्रस्थापनम्—

स्ववामभागे दर्भान् पुष्प-दूर्वाश्च आज्यस्थालीं चरुस्थालीं च स्रुवं स्रुचं च प्रणीतां प्रोक्षणीं च द्वन्द्वशः प्रागपवर्गं यथा—तथाऽधोमुखानि संस्थाप्य तन्मध्ये प्रोक्षणीम् उत्तानां च कृत्वा सामान्यार्घोदकजलेनापूर्य कुशैस्त्रिधोत्पवनं कृत्वा तेन जलेन सर्वाणि पात्राणि सम्प्रोक्ष्योत्तानानि कृत्वा बालयाऽभिमन्त्रयेत् । ततो दूर्वाभिः कुण्डस्य परितः पूर्वाग्रमुत्तराग्रं परिस्तरणं कृत्वा स्रुवं वामकरेणादाय दर्भाङ्कुरेण तद्वक्त्रं पश्चिमात् पूर्वदिशपर्यन्तं त्रिः परिमृज्याधस्तात् करमानीयोपरिष्टाद् यावद् वक्त्रपर्यन्तं नीत्वा बालयाऽभिमन्त्रयेत् । ततः प्रणीतापात्रजलमाज्यस्थाल्यां दूर्वासु पुरतः स्थापितायाम् आज्यं स्रुक्-स्रुवयोः पुष्पं घृतयुतं निक्षिपेत् । ततश्चरुस्थाल्यां चरुं श्रपयित्वा दर्भास्तरे संस्थाप्य धूपं सर्वतो

धूपयित्वाऽभितः कुण्डं त्रिपङ्क्त्या मेखलात्रयोपरि दीपमालां कृत्वा– 'अस्मिन् कर्मणि कृताकृतावेक्षत्वेन ब्रह्मत्वेन त्वामहं वृणे' इत्यग्नेर्दक्षिणतो ब्रह्माणं वृत्वा स्थापयेत् ।

अत्र च मूलोक्तक्रमान्यथाकरणं मूलानुक्तपदार्थान्तराणां च करणमपेक्षितत्वात् संहितोक्तं द्रष्टव्यम् । ततः–

'ॐ वैश्वानरेत्यादि-पूर्वोक्तमनुना दर्भकङ्कणमादायाग्नेः करे बन्धयामि'–इति बुद्ध्या हुनेत् । ततः स्रुवेण–

ॐ वैश्वानर जातवेद॰' इति मन्त्रान्ते 'ऐं' अग्नेर्गर्भाधानं सम्पादयामि स्वाहा' इत्यष्टावाज्याहुतीर्हुत्वा एवमेव पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरण-उपनिष्क्रमण-अन्नप्राशन-चौल-उपनयन-महानाम्न्य-महाव्रत-औपनिषद्व्रत-गोदानव्रत-समावर्त्तन-विवाहान्तान् पञ्चदशसंस्कारान् कृत्वा सिन्दूरादिलिखित-पूर्वत्रिकोण-षट्कोण-वसुपत्र-चतुरस्र-चतुर्द्वाररूपयन्त्रे षट्-कोणेषु षडङ्गानि सम्पूज्य, अष्टपत्रेषु ब्राह्म्याद्यष्टमातॄः, भूबिम्बे लोकपालान् सम्पूज्य त्रिकोणमध्ये प्रौढं जातं वह्निं सम्पूज्य तद्वह्निमुखे समस्तदेवतावृन्दाधिष्ठितं श्रीचक्रराजं समावाह्य सर्वोपचारैर्नित्यक्रमेण सम्पूज्य पूर्वस्थापित-चरुमुद्वास्य स्रुवेणाज्यमिश्रितं कृत्वा स्रुच्यवदानमादाय नित्यहोमोक्तैकादशाहुतीर्हुत्वा पुनस्तथैवावदानमादाय मूलान्ते 'महात्रिपुर-सुन्दर्यै स्वाहा' इत्येवं प्रयोगेणैकैकामाहुतिं हुत्वा चरुशेषं कुण्डस्य परितो विकीर्यानन्तरं किंशुककुसुमैर्वा त्रिमधुराक्तैर्मूलान्ते 'महात्रिपुरसुन्दर्यै स्वाहा' इत्येवं जपदशांशेन जुहुयात् ।

अत्र च मूले चरुस्थालीस्थापनविधानं ज्ञापकबलाच्चरुकर्त्तव्यता तेन च नित्यहोम इति गम्यते । संहितायां तु चरुस्थापनानुक्तेश्चरोः प्रयोजनाभावादाज्येनैव तत्तदावरणहोम उक्तः । अत एवाज्यहोमस्थाने चरुहोमप्रतीतेः ।

**समस्तचक्र-चक्रेशीसहितां होमयेत् ततः ।**
**दशाज्याहुतिभिः पश्चात् पूजनादिक्रमेण च ॥**
**समस्तचक्रचक्रेशी प्रकटाद्याश्च योगिनीः ।**
**होमयेच्च घृतेनैव चैकैकामाहुतिं क्रमात् ॥**

इति संहितोक्ताहुतिर्द्रष्टव्या ।

अथ वक्ष्यमाणतत्तत्कामनाहोमसाधनयावदुक्तद्रव्यैः पृथक्-पृथग्भूतैः समस्तमिश्रितैरथवा यथाशक्तिमीलितैरेकत्र मिश्रितैर्जपदशांशेन होमः

कार्यः । एवं दशांशतो हुत्वा एकाब्दादि-षोडशाब्दान्ताः कुमारीर्बालया सम्पूज्य तासु मूलेन श्रीविद्यां सम्पूज्य, सप्तदशाब्दादि-द्वात्रिंशदब्दान्ताः सुवासिनीपदवाच्ययोगिनीः पञ्चसिंहासनैः सम्पूज्य तासु मूलेन श्रीविद्यां सम्पूज्य ब्राह्मणान् सम्पूज्य तेषु मूलेन श्रीविद्यां सम्पूज्य समस्तदर्शनाभिमानिनश्च यथालाभं सम्पूज्य तेषु श्रीविद्यां सम्पूज्य पूर्णाहुतिं कुर्यात् ।

तथा स्रुवेण स्रुचं घृतेनापूर्य तदग्रे पुष्पं फलं च निधाय स्रुवेणाच्छाद्योत्थाय देवतां ध्यायन् वौषडन्तेन मूलेन पूर्णाहुतिं हुत्वोपविश्य पुष्पाञ्जलिं तत्र दत्त्वा नमस्कृत्य संहारमुद्रया मूलेन स्वात्मनि मूर्त्तौ वा देवतां संयोज्य स्रुवेणाज्येन महाव्याहृतीर्हुनेत् । तथा–

ॐ भूः अग्नये पृथिव्यै महते स्वाहा । ॐ भुवो वायवेऽन्तरिक्षाय महते स्वाहा। ॐ स्वः आदित्याय महते स्वाहा । ॐ भूर्भुवः स्वश्चन्द्रमसे नक्षत्रेभ्यो महते स्वाहा ।

ततोऽग्नये पुष्पाणि दत्त्वा संहारमुद्रया वैश्वानरमन्त्रान्ते–

**'भो भो वह्ने महाशक्ते ! सर्वकार्यप्रसाधक ! ।**
**कर्म्मान्तरेऽपि सम्प्राप्ते सान्निध्यं कुरु सादरम् ॥**

इत्यग्निं विसृज्य पवित्रेऽग्नौ प्रक्षिप्य प्रणीताजलं तत्रैव भूमौ निक्षिप्य ब्रह्मणे पूर्णपात्रं दत्त्वा परिस्तरणदर्भांश्च वह्नौ निक्षिपेत् ।

अथ **काम्यद्रव्याणि–**

अयमेव पुरश्चरणहोमो मालतीमल्लिकाजातीकुसुमैर्मधुमिश्रितैर्घृतपूर्णैः क्रियते तदा वागीशत्वप्राप्तिः । आज्ययुक्तैर्जपापुष्पैस्तथा करवीरैश्च होमे लोकत्रयनिवासिमोहः । मृगमदमिश्रित-कर्पूर-कुङ्कुमहोमे सौभाग्यलाभः । चम्पकैस्तथा पाटलैश्च होमे क्रमेण लक्ष्मीर्जगतीस्तम्भः । श्रीखण्डमुस्ताचन्द्रागरुभिः प्रत्येकं होमे देवपुरन्ध्रीवशता । लाक्षाहोमे राज्यलाभः । मांसयुतान्नहोमे दुर्गोपसर्गशमः । छागस्य रुधिराक्तेन मांसेन निशि चतुष्पथदेशे होमात् परराष्ट्रवैरिवश्यता । क्षीरदधिमध्वाज्यैः प्रत्येकं होमे क्रमेणायुर्धनारोग्यसमृद्धीनां लाभः । क्षीरमधुभ्यां सहिताभ्यां होमे मृत्युनाशः।दधि-माक्षिकाभ्यां सहिताभ्यां होमे सौभाग्यलाभः । केवलसितया होमे वैरिस्तम्भः । दधि-मधु-क्षीर-लाजैः सहितैर्होमे दुष्टसत्त्ववश्यता । श्वतोत्पलैर्होमे प्रियवाग्लाभः । श्वेतैर्ब्रह्मकमलैर्होमे लक्ष्मीसौभाग्यम् । कह्लारहोमे सौभाग्यं धनम् । सम्पूर्णदाडिमहोमे

ब्राह्मणवश्यता । मातुलिङ्गफलहोमे क्षत्रियवश्यता । नारङ्गफलहोमे वैश्यवश्यता । कूष्माण्डफलहोमे शूद्रवश्यता ।

द्राक्षाफलैर्लक्षहोमेऽष्टसिद्धयः । कदलीफलैर्लक्षहोमे दशसङ्ख्याकराजवश्यता । खर्जूरफलैर्लक्षहोमे विंशतिसङ्ख्याकराजवश्यता । नारिकेलफलैर्लक्षहोमे समृद्धिः । पक्वान्नफलैर्लक्षहोमे पृथ्वीवश्यता । तिल-तन्दुलहोमे शान्तिः । शर्कराऽगरुभ्यां होमे सर्वकामार्थसिद्धिः । सिता-घृतयुत-पायसहोमे त्रैलोक्यवश्यता । नानाविधान्नहोमे धान्यसिद्धिः । सोपस्करवटकहोमे उपसर्गनाशः । बन्धूककुसुमैर्होमे सर्वसत्त्ववश्यता । जपापुष्पैर्जगद्वश्यता । बाण-पुष्पैर्होमे मोहनम्। बकुलपुष्पैर्होमे सौभाग्यम् । दशाङ्गधूपहोमे सौभाग्यम् । जम्बूफलैर्होमे स्त्रीवश्यता । कूष्माण्डैर्होमे दैत्यकन्यकावश्यता । बिल्वफलैर्होमे लक्ष्मीः । तदीयपत्रैरपि होमे लक्ष्मीः । इक्षुखण्डैः सुखावाप्तिः । नारिकेलफलैर्होमे वश्यता । केवलघृतहोमे सकलशक्तयो वरदा भवन्ति । अत्र मूले—

'द्राक्षाफलैः सिद्धयोऽष्टौ लक्षहोमान्न संशयः ।'

इत्यादिलक्षसङ्ख्यहोमप्रतिपादकानि मध्ये वचनानि, तानि पुरश्चरणाङ्गत्वेन प्राप्तदशांशसङ्ख्याबाधक-लक्षसङ्ख्याविधानार्थानि । तथा च तथाविधदशांशसङ्ख्यां विहायापि लक्षमात्रसङ्ख्यया होमे कृते फलसिद्धिरित्यर्थः । अथाहुतिमानमुक्तं मूले—

शृणु देवि प्रवक्ष्यामि मानं हवनसिद्धिदम् ।
पुष्पं समग्रं जुहुयात् कमलं वापि पुष्कलम् ॥
कुसुम्भ-बाणपुष्पाणि यथेष्टानि हुनेत् प्रिये ।
शतसङ्ख्यास्तिला देवि राजिकाशतसंख्यया ॥
लाजामुष्टि-प्रमाणाः स्युर्घृतं च पलमात्रकम् ।
तुलकार्द्धं भवेत् क्षीरमन्नं ग्रासमितं भवेत् ॥
स्थूलं फलं महेशानि कूष्माण्डं मातुलिङ्गकम् ।
मनःप्रियैश्च खण्डैश्च फलं भवति निश्चयात् ॥
रम्भाफलं चतुःखण्डं लघु चेत् खण्डितं नहि ।
नारिकेलस्य खण्डं तु स्थूलं कुर्यान् मनःप्रियम् ॥
पर्वस्थाने चेक्षुदण्डं मनःसन्तोषकारि वा ।
द्राक्षाफलं समग्रं स्यान्नारङ्गं खर्जुरं तथा ॥
गुग्गुलं क्रमुकार्धं तु कुङ्कुमं च तथा भवेत् ॥

गुञ्जासमं तु कर्पूर-कस्तूरी-घुसृणं तथा ।
चन्दनं चागरुं देवि क्रमुकेन समं भवेत् ॥
मनःप्रियाणि सर्वाणि फलानि हवने प्रिये ।
द्राक्षा-गुग्गुलु-सङ्ख्याका कुमुदं तु मनोहरम् ॥
मनःप्रियाहुतीः कृत्वा होमं कुर्यात् सुलोचने ।
एतदाहुतिमानं ते कथितं सर्वविघ्नहृत् ॥ इति ।

लवण-सङ्ख्या तु संहितायाम्—

'तथैव लवणं लाजान् मुष्टिमात्रं हुनेद् बुधः ।
................ अन्नं ग्रासमितं भवेत्' ॥ इति ।

मूलस्थान्नपदेन पक्वापक्वरूपमन्नद्वयं गाह्यम् ।

'अन्नं तु ग्रासमात्रं हि पक्वान्नैश्च तथा हुनेत्'।

इति संहितैकवाक्यत्वात् । द्राक्षाफलं समग्रं स्यादित्यत्रापक्वमार्द्रं द्राक्षाफलं गृह्यते । द्राक्षागुग्गुलसङ्ख्याकेत्यत्र तु पक्वं शुष्कं तदिति भेदः । कुङ्कुम-घुसृणयोर्भेदस्तु जातिभेदकृतः । नानाद्रव्याणां समुच्चयेन होमे किं प्रमाणमित्यपेक्षायां 'मनःप्रियाहुती'रिति प्रमाणम् । तत्र मूले यच्चतुरस्रं कुण्डं हस्तमात्रमुक्तं तत् प्रत्यहमेव जपदशांशेन होमानुष्ठानपरम् । अन्ते होमानुष्ठाने तु सहस्राधिकसङ्ख्यया कुण्डे हस्तवृद्धिर्ज्ञेया । तदुक्तं शारदातिलके—

मुष्टिमात्रमितं कुण्डं शतार्द्धे सम्प्रचक्षते ।
शतहोमेऽरत्निमात्रं बाहुमात्रं सहस्रके ॥
द्विहस्तमयुते लक्षे चतुर्हस्तामुदीरितम् ।
दशलक्षे तु षड्हस्तं कोट्यामष्टकरं स्मृतम् ॥
एकहस्तमितं कुण्डमेकलक्षे विधीयते ।
लक्षाणां दशकं यावत्तावद् हस्तेन वर्धयेत् ॥
दशहस्तमितं कुण्डं कोटिहोमेऽपि शस्यते ॥ इति ।

होमद्वयपक्षेऽपि मन्त्र-तन्त्र-प्रकाशादिषूक्तः ।

सङ्ख्यापूर्तौ निजैर्द्रव्यैर्जपसंख्यादशांशतः ।
तथोक्तकुण्डे जुहुयाद् यथाविधि समाहितः ॥
अथवा प्रत्यहं जप्त्वा जुहुयात् तद्दशांशतः ।
ततो होमदशांशं तु जले सम्पूज्य देवताम् ।
तर्पयामीति मन्त्रान्ते प्रोक्ताऽद्भिर्मूर्ध्नि तर्पयेत् ॥ इति ।

कुण्डकरणाशक्तौ त्वङ्गुष्ठपर्वमात्रोच्चं बालुकाभिः स्थण्डिलं कुण्ड-प्रमाणं कुर्यात् । तत्रेदमवधेयम्—चतुर्दशे पटले तावन्मालाप्रकरणान्ते—

**अक्षमालां समाश्रित्य चन्दनेन प्रपूजिताम् ।**
**समाश्रित्य जपेद् विद्यां लक्षमात्रं सदा शुचिः ॥**

इत्यदिना लक्षत्रयजपः ।

**'एवं लक्षत्रयं जप्तो व्रतस्थः स्वच्छमानसः ।**
**स क्षोभयति भूर्लोक॰........................ ॥**

इत्यादिना विधीयते । व्रतस्थ इत्यनेन चायं पुरश्चरणजप इति सूच्यते । अनन्तरं च तदङ्गभूतदेशहोमाद्यनभिधायैव यत् काम्यप्रयोगाभिधानं तत्तेषां पुरश्चरणानन्तरं कर्तव्यता-द्योतनार्थम् । मध्ये च पञ्चदश-षोडशपटलयोः काम्यमभिधाय पुनः सप्तदशे पटले जपहोमविधिप्रश्ने पार्वतीकर्तृके जपहोमप्रकारप्रतिपादनं शिवकृतम् । तत्र च नवलक्षप्रमाणं यत् पुरश्चरणमुक्तम्, तत्—

**नवलक्षप्रमाणानि जपेत् त्रिपुरसुन्दरीम् ।**
**रुद्रमूर्त्तिः स्वयं कर्त्ता हर्त्ता साक्षान्न संशयः ॥**

इति वचनाच्छिवसारूप्यतापादकम् ।

**तत्र स्थित्वा जपेल्लक्षं साक्षाद् देवस्वरूपकः ।**
**ततो भवति विद्येयं त्रैलोक्यवशकारिणी ॥**

इत्यनेन यच्चतुर्दशे पटले उक्तं लक्षत्रयपुरश्चरणं पुनः सिंहावलोकन-न्यायेनोच्यते । तस्य फलं विद्यासिद्धिः । एकलक्षजपपुरश्चरणस्यैव सतो मध्ये—

**'योषितो द्रावयन्त्येव मनस्तस्य सुनिश्चलम्' ॥**

इत्यादिना विघ्ने सति द्वितीयलक्षता-तृतीयलक्षता-पर्यन्तत्व-विधानान्नव-लक्षमित्येकवचनान्तानुपपत्तिः । अग्रे च—

**"किंशुकैर्हवनं कुर्याद् दशांशेन वरानने" ।**

इत्यादिना विधीयमाना निष्काम-सकामहोमास्ते उभयविध-पुरश्चरणाङ्ग-भूता ज्ञेयाः । एवं च त्रिलक्षं विद्यासिद्ध्यै पुरश्चरणं कृत्वाऽनन्तरं नवलक्षपुरश्चरणं कार्यमिति सिद्धं पुरश्चरणद्वयम् । एवं सति—

**तदा लक्षत्रयं कुर्यान्नियमेन शुचिर्बुधः ।**

तथा—

**अथवा नवलक्षं तु जपेद् विद्यां समाहितः ॥**

**तद्दशांशेन होमस्तु पूर्वोक्तविधिना यजेत् ।**

इत्येकोनत्रिंशपटलोक्तं संहितैकवाक्यता च लभ्यत इत्यलं विस्तरेण ।

सोऽयं होमोऽग्नेर्जिह्वायामेव कार्यः—

**केशे दारिद्र्यदं प्रोक्तं तस्माज्जिह्वासु होमयेत् ।**

इति वचनात् । जिह्वा चोक्ता 'गुरुकल्पे'—ल्वें'—

**यत्रैव ज्वलितो वह्निस्तत्र जिह्वा प्रकीर्तिता ।**

तथा 'शारदा'याम्—

**अग्निर्जिह्वायते यत्र शुद्ध-स्फटिक-सन्निभः ।**
**तन्मुखं तत्र विज्ञेयं चतुरङ्गुलमानतः ॥ इति ।**

अथ स्रुक्-स्रुवौ—

तत्र श्रीपर्णी-शिंशिपा-चन्दन-रक्तचन्दन-बिल्वाम्र-पनस-चम्पक-पुंनाग-खदिर-वैकङ्कत-पलाश-वट-पिप्पल-प्लक्षोदुम्बरादि-वृक्षाणामन्यतमस्य शुष्कमव्रणमशीर्णं घुणादिभिरदुष्टमुद्दिष्टमानादधिकदीर्घस्थूलत्वयुतं समचतुरस्रं काष्ठं गृहीत्वा तत्रचतुर्विंशत्यङ्गुष्ठमानंषट्त्रिंशदंशेन विभज्य तेषु विंशत्यंशं दण्डार्थं विभज्यावशिष्ट-षोडशभागेषु अग्रदेशे भागाष्टकं मुखार्थं परिकल्प्यावशिष्टभागाष्टकेन समचतुरस्रां वेदिं कृत्वा तन्मध्ये चिह्नं कृत्वा तच्चिह्नमवलम्ब्यार्द्धांशमानेनाभितो वृत्तं निष्पाद्य तद्बहिरेकांशमानेन वृत्तान्तरं निष्पाद्य वृत्तयोरन्तराले भागत्रयनिम्नं मध्ये वृत्ताकारां कर्णिकां स्थापयन् गर्त्तं कृत्वा तद्बहिरर्धांशमाने वृत्तं निष्पाद्य तद्बहिरप्येकांशेन वृत्तान्तरं कृत्वा वृत्तद्वयान्तरालेऽष्टदलादि परिकल्प्य तद्बहिरर्धांशमानेन परितश्चतुरस्रां मेखलां विधाय तद्बाह्येऽर्द्धांशमानेन सुसमाकारां विचित्रां वा शोभां विदध्यात् ।

ततोऽग्रेऽवशिष्टांशेष्वेकांशेन वेद्यास्तृतीयांशेन पार्श्वद्वयखण्डनेन मध्ये कण्ठं विधाय कण्ठतः किञ्चिदुन्नतमवशिष्टैः सप्तभिरग्रे कण्ठसमानविस्तारं समतलमध्यस्तादधोऽधः क्षीयमाण-विस्तारं मुखं कृत्वा मुखेऽपि वेदिवन्मेखलां कृत्वा परिकल्पितकण्ठादधोमुखस्थमेखलामभिन्दन् प्रणालाकारमेकांशमान-निम्न-कनिष्ठिका-प्रवेशयोग्यं खातं कृत्वा कर्णिकामध्यस्थखातमध्यान्मुखमध्यस्थप्रणालाकारखातमध्ये यथा घृतं निःसरति तथा लोहशलाकया कण्ठं वेदीपरिभेदि च सुषिरं विधाय तथैवाग्रेऽपि मुखपरिभेदिनं घृतनिर्गमनाय कनिष्ठाप्रवेशयोग्यं रन्ध्रं कुर्यात् । ततो वेद्याः पृष्ठभागे मध्ये किञ्चिन्निम्नं कृत्वा मुखरन्ध्राधस्तादुच्चभागं हंसमुखाकारं

गजमुखाकारं वराहमुखाकारं वा सुरम्यं कारयित्वा स्रुचं यन्त्रे आरोप्य तद्दण्डमुद्दिष्टमानात् किञ्चिदधिक-स्थूलं सुवर्त्तुलं शिल्पिवरेण कारयित्वा दण्डस्य मूले एकांशेन कङ्कणाकारचयं तच्चतुष्टयं वा कारयित्वा तदुपर्य्यंशत्रयेण मुख-कण्ठ-मध्य-मूलादि-सुशोभितमूर्ध्वमुखं कुम्भं निर्म्माय तदूर्ध्वं पुनरेकांशेन कङ्कणानि कृत्वा तदूर्ध्वं नवांशमानं सुवर्त्तुलं षडंशमानदैर्घ्यसूत्रेण वेष्टनयोग्यं स्थूलदण्डमध्यं कृत्वा तदूर्ध्वं पुनरेकांशेन कङ्कणानि तदूर्ध्वांशचतुष्टयेन प्राग्वदूर्ध्वमुखं कुम्भं तदूर्ध्वं पुनरेकांशेन कङ्कणानि च कुर्यात् ।

इति स्रुचं निर्माय स्रुचश्चतुर्विंशतिभागदैर्घ्य-स्थूलमग्रदेशेंऽशद्वयमानेन वर्त्तुलाकारस्थूलशिरोभागयुतं सुवर्त्तुलं स्रुवं निर्माय तस्य मुखप्रदेशे पङ्कजमध्यगतं मृगपोतपदाकारं कर्षमात्रग्राहि खातं कृत्वा तदधो दण्डमूले एकांशमानेन प्राग्वत् कङ्कणानि तदूर्ध्वांशत्रयेण कुम्भं तत एकांशेन पुनः कङ्कणानि तत एकादशांशमानं चतुरंशमानदैर्घ्यसूत्रवेष्टनयोग्यस्थूलं दण्डमध्यं कृत्वा पुनरेकांशेन कङ्कणानि ततोंऽशचतुष्टयेन कुम्भं पुनरेकांशेन कङ्कणानि कुर्यादिति स्रुक्-स्रुवनिर्माणप्रकारः । एवं स्वर्णरौप्य-ताम्रमयौ वा स्रुक्स्रुवौ कार्यौ । स्रुक्स्रुवाभावे पलाशस्य मध्यपत्रद्वयं पिप्पलपत्रद्वयं वा होमे ग्राह्यम् । संस्कारोऽपि स्रुक्स्रुवयोरिव पर्णयोरपि कार्य इति ।

एवं होमं कृत्वा—'अद्येह पुरश्चरणाङ्गभूतहोमदशांशेन तर्पणमहं करिष्ये' इति सङ्कल्प्य जले देवतां सम्पूज्य मूलान्ते 'महात्रिपुरसुन्दरीं तर्पयामि' इति मन्त्रमुच्चार्य कालागरुद्रवोपेतैर्निर्मलगन्धवारिभिर्देवस्य मस्तके जलमञ्जलिना दद्यादिति तर्पणम् । तदुक्तम्—

**कालागरुद्रवोपेतैर्निर्मलैर्गन्धवारिभिः । इति ।**

एवं तर्पणं कृत्वा देशकालौ सङ्कीर्त्य 'पुरश्चरणाङ्गभूतं तर्पण-दशांशेनाभिषेकं करिष्ये' इति सङ्कल्प्य गोमयोपलिप्तायां भूमावष्टदलं विलिख्य तत्र कलशं संस्थाप्य गन्ध-दूर्वाङ्कुराशोक-पल्लव-चूतपल्लव-पुष्पैः सम्पूज्य षोडशचन्द्रकलाः सम्पूज्य मातृकामन्त्रेणाभिमन्त्र्य मूलान्ते 'महात्रिपुरसुन्दरीमभिषिञ्चामि' इत्युच्चार्य स्वमूर्ध्न्यभिषिञ्चेत् । तदुक्तं तन्त्रान्तरे—

**तर्पणान्ते महामन्त्री अभिषेकं तु कारयेत् ।**
**गोमयेनोपलिप्तायां भूमावष्टदलं लिखेत् ॥**

कलशं स्थापयेत् तत्र कलाश्चैव प्रपूजयेत् ।
गन्धदूर्वाङ्कुरैर्वापि अशोकैश्चूतपल्लवैः ॥
सम्पूज्य गन्ध-पूष्पाद्यैरुपचारैः प्रपूजयेत् ।
मातृकामन्त्रमुच्चार्य प्रत्येकं मन्त्रमुच्चरेत् ॥
अभिषिञ्चामीति पदं शिरसि चाभिषिञ्चयेत् ॥ इति ।

एवमभिषेकं विधाय तद्दशांशेन स्वेष्टदेवताभक्तान् ब्राह्मणान् भोजयेत् । एवं पञ्चाङ्ग-पुरश्चरणं कृत्वाऽन्ते महतीं पूजां कृत्वा भूरि ब्राह्मणभोजनं कुर्यात् । तदुक्तं 'पुरश्चरण-चन्द्रिका'याम्–

पुरश्चर्यां विधायेत्थं सम्यक् साधक-सत्तमः ।
तदन्ते महतीं पूजां कुर्याद् ब्राह्मणभोजनम् ॥
बहुभिर्वस्त्रभूषाभिः पूजयेद् गुरुमात्मनः ॥ इति ।

ततो गुरुपूजां कृत्वा सुखी विहरेत् ।

॥ इति पुरश्चरण-विधिः ॥

अतः परं मूलोपदिष्टान्यपि 'चक्रसाधन-त्रिबीज-साधनादि-काम्य-प्रयोगादीनि परमार्थ-विद्योपासकानां मोक्षार्थे प्रवृत्तानां कथमपि तेषु परमार्थविरुद्धेषु प्रवृत्तिर्मा भूदित्येतदर्थमिव स्पष्टत्वान्न व्याख्यातानि । अन्तर्होम-दूतीयागादिकं च गुरु-सम्प्रदाय-लभ्यमिति रहस्यत्वान्नोपपादित-मिति संक्षेपः ।

[उपसंहारः]

यदत्र किञ्चिल्लिखितं मयात्र त-
न्न नव्यमस्तीत्यवहेलनीयम् ।
यतो हि मूलार्थ-निबद्धमार्गं
विमृश्य सद्भिः परिभाव्यमेव ॥ १ ॥
रामानन्द-गुरुप्रसाद-गलिताज्ञानश्चकार स्फुटं
पूजा-पद्धति-सङ्गतार्थ-विषम-ज्ञानार्णवोक्तेरहम् ।
व्याख्यानं तु यथामतिप्रभजतां श्रीसुन्दरी-पादुकां
तोषं तज्जनयेदपार्थकमपि प्रेमार्द्रभक्त्या पराम् ॥ २ ॥

रहस्यभूत-सत्प्रमेयभासकः समासतो
निबन्ध एष 'सुन्दरी-महोदयः' कृतो मया ।
विरञ्चि-विष्णु-पूज्ययोर्मदीयनाथभूतयो-
र्महेश-सुन्दरी-पदारविन्दयोः समर्पितः ॥ ३ ॥
शङ्करानन्दनाथेन कविमण्डन-शम्भुना ।
कृतं ग्रन्थं गुरुप्रीत्यै भजन्तु सदुपासकाः ॥ ४ ॥

॥ इति श्रीमत्परमहंस-परिव्राजकाचार्य-श्रीरामानन्दसरस्वतीपूज्यपाद-शिष्य-श्रीशङ्करानन्दनाथ-कृते श्रीसुन्दरीमहोदये पञ्चमोल्लासः ॥

॥ वर्द्धिष्णुरयं सुन्दरी-महोदयो भवेत् ॥

'कृष्णानन्द-यतीन्द्र'-पादरजसां स्मृत्याप्त-विद्योदयो
गायत्री-कृपयाऽऽत्मदेव-सुगुरोः श्रीविद्यया दीक्षितः ।
पूज्यश्रीकरपात्रमस्करिवरैः पूर्णाभिषिक्तः श्रिया
सोत्साहं समपादयत् कृतिमिमां 'श्रीरुद्रदेवः' सुधीः ॥
सारस्वत-सुधा-सिक्त-स्वान्तानां सुविपश्चिताम् ।
विद्यानिवासमिश्राणां प्रेरणा-कणिकाऽञ्चितः ॥
जगज्जनन्याः 'सुन्दर्या' महोदयमिमं मुदा ।
'रुद्रदेवानन्दनाथः' सुसम्पाद्य समार्पिपत् ॥

॥ ॐ स्वस्ति ॥



